गावो महिष्यश्च गभीरनादाः
संचारिताः शार्ङ्गभृता यथार्हम् ।
कलिन्दकन्यामवगाह्य काले
घर्मापदा संपदमेव भेजुः ॥ ६ ॥

**गाव इति** । शार्ङ्गभृता कृष्णेन । यथार्हं यथोचितं तत्तदुचितदेशेषु । संचारिताः । गभीरनादाः परिपोषादृषभवन्मन्द्रनादाः । गावः । महिष्यश्च । काले उचितसमये । कलिन्दकन्याम् । अवगाह्य । घर्मापदा निदाघरूपया विपदा । संपद समृद्धिमेव । भेजुः; घर्मेऽपि च्छायासलिलतृणादिवैकल्या-भावान्न कार्श्यं प्रापुरित्यर्थः ॥ ६ ॥

गतेऽपि भूयिष्ठगुणे वसन्ते
गोपाः सुखं चारितगोधनास्ते ।
कलिन्दजानूपसमीपभाजः
कालं कठोरातपमत्यनैषुः ॥ ७ ॥

**गतेऽपीति** । भूयिष्ठगुणे स्वतस्तृणगणसलिलसमृद्ध्यादिगुणप्रचुरे । वसन्ते । गतेऽपि । सुखं चारितगोधनाः भगवदाज्ञया ग्रीष्मेऽपि वनस्य तृणादिपूर्णतया सुखं यथा तथा संचारितगोरूपधनाः । ते गोपाः । कलिन्द-जानूपसमीपभाजः शैत्यार्थं यमुनाकच्छोपकण्ठभाजः सन्तः । कठोरातपं उग्रातपम् । कालम् । अत्यनैषुः अतिवाहयांबभूवुः ॥ ७ ॥

वितेनिरे जङ्गमधामकल्पै-
रनोभिरध्यासितचत्वराणि ।

निदाघवर्षानुगुणानि गोपाः
स्थानानि गोवत्सगुणोचितानि ॥ ८ ॥

**वितेनिर इति** । गोपाः । जङ्गमधामकल्पैः अतिविपुलतया संचारिगृहतुल्यैः । अनोभिः शकटैः । अध्यासितचत्वराणि अधिष्ठिताङ्गणानि । निदाघवर्षानुगुणानि आतपवृष्टिवारणक्षमतया ग्रीष्मवर्षासमययोरनुकूलानि । गोवत्सगुणोचितानि गवां वत्सानां च गुणस्य प्रत्येकबन्धनादेर्योग्यानि, तथा विशालानि । स्थानानि गृहाणि । वितेनिरे चक्रुः ॥ ८ ॥

अकालकाल्येन परेण पुंसा
साम्यं गतानामिव वल्लवीनाम् ।
सुखाय सर्वे समया बभूवुः
स्वैः स्वैरविच्छिन्नगुणैर्विशेषैः ॥ ९ ॥

**अकालेति** । सर्वे समयाः ग्रीष्मवर्षादिकालाः । वल्लवीनां गोपस्त्रीणाम् । अकालकाल्येन कालेन कालयितुं चोदयितुमशक्येन, कालविशेषप्रयुक्तशीतोष्णादिदोषैरभिभवितुमशक्येनेति यावत् । परेण पुंसा कृष्णेन । साम्यं गतानाम् । 'उभे विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति श्रुतिसिद्धं मुक्तिरूपं साम्यं प्राप्तानामिव । अविच्छिन्नगुणैः निरन्तरसौरभ्यादिगुणैः । स्वैः स्वैः विशेषैः स्वस्वपुष्पफलादिभिः । सुखाय बभूवुः भगवत्परिग्रहेण तासामपि माननीयत्वादतवस्तासामप्रीणनमकुर्वन्नित्यर्थः । ग्रीष्मदोषनिवृत्तिप्रसङ्गात्क्रमभाविऋत्वन्तरदोषाणामपि निवृत्तिरिहोक्ता ॥ ९ ॥

सुधाप्लवस्वैरसखीमभिख्यां
वनाश्रिते वर्षति कृष्णमेघे ।
मध्यंदिनेऽप्याददिरे विहारा-
न्गावः प्रकामं गतघर्मतापाः ॥ १० ॥

**सुधेति** । वनाश्रिते वृन्दावनमाश्रिते । जलेनाश्रिते इति च गम्यते । 'वनं काननन्नीरयोः' इति विश्वः । कृष्ण एव मेघे । कालमेघ इत्यपि प्रतीयते । सुधाप्लवस्वैरसखीं अमृतस्नानस्वाच्छन्द्यस्य सखीम्, तत्सपादिनीमिति यावत् । अभिख्यां कान्तिम् । वर्षति सति । गावः नन्दव्रजस्थाः । गतघर्मतापाः सत्यः । मध्यंदिनेऽपि मध्याह्नेऽपि अतिकठोरातपसमयेऽपीति भावः । प्रकामं विहारान् आददिरे, पर्याप्त विजह्रुः ॥ १० ॥

तापापहन्तुः स्वपदाश्रितानां
तत्तादृशा तस्य समीक्षणेन ।
न तस्य गोपाध्युषितस्य जज्ञे
वनस्य वातातपवह्निपीडा ॥ ११ ॥

**तापेति** । स्वपदाश्रितानां स्वचरणं प्रपन्नानाम् । तापस्य अपहन्तुः । तस्य कृष्णस्य । तत्तदिव दृश्यत इति तत्तादृशा, तत्तदिति वीप्सितपदेन बह्वयातपाद्युपद्रवहारित्वेन प्रसिद्धाः सुधाप्लवनादयः संगृह्यन्ते, तैः सदृशेनेत्यर्थः । यद्वा 'तादृशादयो रूढिशब्दा नैवात्र दर्शनक्रिया विद्यते' इति काशिकावचनात्तादृक्शब्दो रूढ्या तत्प्रकारत्वार्थः । तथा च तच्छब्दः स्वरूपप्रसिद्धिपरः । तादृक्शब्दो महामहिमत्वादिरूपतत्प्रकार-

विशेषप्रसिद्धिपरः । तयोः खञ्जकुब्जवद्विशेषणसमासे तत्तादृशेति रूपम् । समीक्षणेन अवलोकनेन । गोपैः अध्युषितस्य । तस्य वनस्य । वातातपवह्निपीडा ग्रीष्मप्रयुक्ता । न जज्ञे नासीत् ॥ ११ ॥

**प्रसाधिताः पाटलपुष्पजालैः**
**प्रच्छायनिद्राशमितोपतापाः ।**
**दिनावसानस्नपनेन शीता**
**गोप्यः प्रियैर्निर्विविशुर्निशीथान् ॥ १२ ॥**

**प्रसाधिता इति** । प्रच्छायनिद्राशमितोपतापाः प्रकृष्टच्छायाप्रदेशे निद्रया परिहृतघर्मसंतापाः । दिनावसानस्नपनेन शीताः सायंसमये स्नपनेन शीतलाङ्ग्यः । दास्यः स्नपयन्ति गोपीरिति णिजन्तप्रयोगः । सर्वेभ्यो धातुभ्यः स्वार्थे णिजिति केषांचिन्मतात्स्नानमात्रे वा स्नपनप्रयोगः । 'अर्तिह्री—' इत्यादिना पुगागमः । पाटलानीति पुष्पाणि पाटलपुष्पाणि, तेषां जालैः समूहैः । प्रसाधिताः अलंकृताः । गोप्यः । प्रियैः सह । निशीथान् रात्रीः । निर्विविशुः उपभुञ्जते स्म । 'निशीथस्त्वर्धरात्रे स्यान्निशीथो रात्रिमात्रके' इति विश्वः । अत्यन्तसंयोगे द्वितीया ॥ १२ ॥

**निदाघतैक्ष्ण्यादिह दुष्टसत्त्वाः**
**क्षोभं गवां कुर्युरतिक्षुधार्ताः ।**
**इतीक्षमाणः सहजेन सार्धं**
**व्यधत्त नाथो मृगयाविहारम् ॥ १३ ॥**

**निदाघेति** । नाथः कृष्णः । निदाघतैक्ष्ण्यात् ग्रीष्मौष्ण्यात् । अतिक्षुधार्ताः अत्यन्तं क्षुधया आर्ताः । दुष्टसत्त्वाः व्याघ्रादयः । इह बृन्दावने ।

गवाम् । क्षोभं उपप्लवम् । कुर्युः । संभावनायां लिङ् । इति । ईक्षमाणः चिन्तयमानः सन् । सहजेन बलदेवेन सार्धम् । मृगयाविहारं आखेटकक्रीडाम् । व्यधत्त अकरोत् ॥ १३ ॥

प्रसक्तगङ्गायमुनानुषक्त्या
भासा तयोराहितगाढमोहाः ।
अयत्नलभ्योपगमास्तदास-
न्व्यालाः क्षणादर्भकवेधयोग्याः ॥ १४ ॥

प्रसक्तेति । तदा देवस्य आखेटसमये । प्रसक्ता बुद्धिस्वीकृता गङ्गायमुनयोः अनुषक्तिः संसक्तिः यया तया गङ्गायमुनासंगमस्मृतिहेतुभूतया, धवलमेचकतया तत्सदृश्येति यावत् । तयोः रामकृष्णयोः । भासा प्रभया । आहितगाढमोहाः संपादितदृढमोहाः । अत्र मोहशब्देन वैचित्र्यवाचिना मनसो दिदृक्षापारवश्यं लक्ष्यते । अयत्नलभ्योपगमाः अत एव तद्दिदृक्षया निश्चलाङ्गत्वेन यत्नं विना लभ्य उपगमः समीपोपसर्पणं येषां ते । व्यालाः श्वापदव्याघ्रादयः । 'व्यालो दुष्टगजे सर्पे श्वापदे च पुमानयम्' इति वैजयन्ती । क्षणात् अल्पकालादेव । 'क्षणो व्यापारवैकल्ये कालभेदाल्पकालयोः' इति वैजयन्ती । अर्भकवेधयोग्याः शिशूनामपि वेधस्योचिताः । आसन् । सुखेन वेद्धुं शक्या बभूवुरित्यर्थः ॥ १४ ॥

अनुप्रयातैरिव देवमाया-
मच्छेदनीयैरपि दिग्गजानाम् ।
वनं तदन्तर्गतसत्त्वजातं
पाशैरवारुध्यत वत्सपालाः ॥ १५ ॥

**अनुप्रयातैरिति**। वत्सपालाः वत्सानां पालकाः कृष्णस्यानुचरभूताः। अन्तर्गतसत्त्वजातं अन्तर्गतव्याघ्रादिदुष्टसत्त्वव्यूहम्। 'जालं जातं तथा व्यूहः' इति हलायुधः। तत् वनं बृन्दावनम्। देवमायां कृष्णस्य मायाम्। अनुप्रयातैः अनुगतैरिव स्थितैः, तद्वद्बन्धनसमर्थैरिति यावत्। दिग्गजानामपि। अच्छेदनीयैः छेत्तुमशक्यैः। पाशैः। अवारुन्धत। यथा सत्त्वाः बहिर्गन्तुं न शक्नुयुः, तथा परितो निरोधं चक्रुरित्यर्थः॥ १५॥

**अनन्तलीलोचितभूमिकाप्तै-**
**रावेदितान्वेदवनेचरेन्द्रैः।**
**पथः समास्थाय गृहीतचापा**
**गुप्तस्थितिं गोपसुता वितेनुः॥ १६॥**

**अनन्तेति**। गृहीतचापाः आत्तशरासनाः। गोपसुताः। अनन्तलीलोचितभूमिकाप्तैः कृष्णस्य लीलायां मृगयारूपायां उचितां भूमिकां वेषं प्राप्तैः। 'तत्तद्वेषो भूमिका स्यात्' इति वैजयन्ती। वेदवनेचरेन्द्रैः वेदैरेव निषादाधिपतिभिः। 'तत्पुरुषे कृति बहुलम्' इत्यलुक्। भगवत्प्रीत्यर्थं स्थलज्ञाः किरातपतयो वयमिति तद्रूपेणागतैर्वेदैरिति यावत्। आवेदितान् अयमयं सत्त्वानां निर्गमनमार्ग इति निवेदितान्। पथः मार्गान्। समास्थाय आश्रित्य। गुप्तस्थितिं गुप्तं उपशयगर्तेषु निलीनं यथा तथा स्थितिमवस्थानम्। वितेनुः॥ १६॥

**क्षणादनिर्धार्य निदानभेदं**
**दत्तापहासैर्वनदेवताभिः।**
**मृगायितं तत्र मृगेन्द्रमुख्यैः**
**सिंहायितं गोकुलसारमेयैः॥ १७॥**

**क्षणादिति**। तत्र वने। निदानभेदं मूलकारणविशेषम्। अनिर्धार्य अविचिन्त्य। वनदेवताभिः। दत्तापहासैः कृतपरिहासैः। मृगेन्द्रमुख्यैः सिंहप्रमुखैः। क्षणात्। मृगायितं मृगवदाचरितम्। गोकुलस्य सारमेयैः शुनकैः। सिंहायितं सिंहवदाचरितम्। 'कर्तुः क्यङ् सलोपश्च' इत्याचारार्थक्यङन्ताद्भावे क्तः। पाशैः परितो निरुद्धे वने सारमेयेषु विसृष्टेषु तेभ्यो भीताः सिंहादयस्तत्र भीतौ कृष्णस्य महिमा मूलकारणमित्यविचिन्त्य, अहो सारमेयेभ्योऽपि बिभ्यतीति वनदेवताभिरपहसिताः सिंहसंनिधौ मृगा इव सद्यः कातरा बभूवुः। सारमेयाश्च मृगान्सिंहा इव तानतिचक्रमुरित्यर्थः। सरमाशब्दाच्छुनीवाचिनः 'स्त्रीभ्यो ढक्' इत्यपत्यार्थे सति सारमेयशब्दः ॥ १७ ॥

**परिस्फुरत्कृत्रिमसत्त्वजातैः**
**प्रसारितैः श्यामपटैर्वनान्ते ।**
**स्वयं तिरोधाय तदर्हशब्दा**
**गोपा मृगान्गूढचराश्चकर्षुः ॥ १८ ॥**

**परिस्फुरदिति**। परिस्फुरन्ति प्रकाशमानानि कृत्रिमसत्त्वजातानि चित्रलिखितव्याघ्रादिप्राणिबृन्दानि येषु तैः। वनान्ते। प्रसारितैः। श्यामपटैः नीलवस्त्रैः। वस्त्रे शौक्ल्यादि दूरेऽपि प्रकाशेत। श्यामिका तु वनरन्ध्रवदेव प्रतीयमाना विश्वासं न व्याहन्तीति श्यामेत्युक्तम्। तैः, तिरोधाय स्वयं तिरोहिता भूत्वा। गूढचराः गूढेषु गुल्मादिसंछन्नप्रदेशेषु संचरन्तः। गोपाः। स्वयं तदर्हशब्दाः चित्रलिखितमृगानुकारिशब्दं कुर्वन्तः सन्तः। मृगान्। चकर्षुः। चित्रलिखितेषु व्याघ्रादिषु सत्यव्याघ्रादिबुद्धिजननेन स्वशब्देषु तदीयशब्दबुद्धिजननेन च तेषां स्वयूथ्यधीदार्ढ्यमुत्पाद्य कर्षन्ति स्म ॥ १८ ॥

शतावरीदामनिबद्धमूर्ध्नः
शार्ङ्गध्वनित्रासितसिंहयूथान् ।
अनीकनाथप्रमुखानकार्षी-
दग्रेसरान्व्याधतनूननन्तः ॥ १९ ॥

**शतावरीति**। अनन्तः। शतावरीदामनिबद्धमूर्ध्नः, शतावरी ओषधिविशेषः। 'ऋश्यप्रोक्ताभीरुपत्रीनारायण्यः शतावरी' इत्यमरः। तत्काण्डरूपैः तत्कन्दत्वङ्निर्मितैर्वा दामभिः संयतमौलीन्। शार्ङ्गध्वनित्रासितसिंहयूथान् धनुषो ध्वनिना त्रासितसिंहकुलान्। 'शार्ङ्गं कार्मुकमात्रेऽपि विष्णोरपि शरासने' इति विश्वः। व्याधतनून् व्याधरूपधारिणः। अनीकनाथप्रमुखान् सेनानीप्रमुखत्वेन कल्पितान्गोपान् पूर्वोक्तान्वेदान्वा। अग्रेसरान् पुरःसरान्। अकार्षीत्। राजानो हि युद्धमृगयादिष्वात्मरक्षार्थं सेनानीप्रमुखान्पुरस्कृत्य स्वयं पश्चाच्चलन्तीति तथा कृतवानित्यर्थः॥ १९ ॥

विमुक्तपाशा मधुवैरिभृत्यै-
र्जिह्वालदुर्दर्शकरालवक्त्राः ।
निपेतुरन्योन्यविमुक्तरोषाः
श्वानो वराहेषु निशातदंष्ट्राः ॥ २० ॥

**विमुक्तेति**। मधुवैरिभृत्यैः कृष्णानुचरैः। विमुक्तपाशाः श्वापदग्रहणाय विसृष्टपाशाः। जिह्वालदुर्दर्शकरालवक्त्राः जिह्वालानि जिह्वावन्ति। लम्बमानजिह्वानीति यावत्। 'प्राणिस्थादातो लजन्यतरस्याम्' इति लच्प्रत्ययः। दुर्दर्शानि द्रष्टुमशक्यानि करालानि विशालानि विकृतानि

वा वक्त्राणि येषां ते । 'करालो दन्तुरे तुङ्गे विशाले विकृतेऽपि च' इति वैजयन्ती । निशातदंष्ट्राः तीक्ष्णदंष्ट्राः । अन्योन्यविमुक्तरोषाः अन्योन्यस्मिन्विमुक्तो रोषः शुनकजातिप्रयुक्तो यैस्ते । श्वानः । वराहेषु वन्येषु । निपेतुः निपतन्ति स्म ॥ २० ॥

संभूय गोपाः प्रसभं प्रयुक्तैः
सत्त्वानि वन्यानि समग्रसत्त्वाः ।
गुहामुखाम्रेडिततीव्रघोषैः
कोलाहलैराकुलयांबभूवुः ॥ २१ ॥

संभूयेति । समग्रसत्त्वाः पुष्कलबलाः । गोपाः । संभूय मिलित्वा । प्रसभ बलात् । प्रयुक्तैः सर्वैरपि युगपदेव यावद्बलं कृतैरित्यर्थः । गुहामुखेषु पर्वतगह्वरद्वारेषु आम्रेडितो द्विस्त्रिरुक्तः तीव्रः चण्डः घोषः प्रतिध्वनिरूपो येषां तैः । कोलाहलैः सिंहनादरूपैः । वन्यानि सत्त्वानि पर्वतगुहालीनानि सिंहादीनि । आकुलयांबभूवुः आकुलानि चक्रुः ॥ २१ ॥

अमृष्यतो मानुषसिंहनादं
गिरीन्द्ररोधैरपि दुर्निरोधान् ।
बभञ्ज दृप्तो बलभद्रसिंहः
सिंहान्द्विपेन्द्रानिव दुर्निवारः ॥ २२ ॥

अमृष्यत इति । दृप्तः गर्वितः । दुर्निवारः वारयितुमशक्यः । बलभद्र एव सिंहः । मानुषसिंहनादं मनुष्याणां सिंहनादाख्यं ध्वनिविशेषम् । 'क्ष्वेला तु सिंहनादः स्यात्' इत्यमरः । अमृष्यतः असहमानान् । गिरीन्द्ररोधैः पर्वतवरप्रतिबन्धैरपि । दुर्निरोधान् , पर्वतानपि भित्त्वा गन्तुं शक्ता-

निति यावत् । सिंहान् । द्विपेन्द्रानिव गजपतीनिव । बभञ्ज जघानेत्यर्थः ॥ २२ ॥

गुञ्जाकलापप्रतिनद्धकेशै-
रागुल्फमालम्बितपिञ्छजालैः ।
निषङ्गिभिश्चारुपृषत्कचापै-
र्गुप्तो बभौ गोपसुतैर्मुकुन्दः ॥ २३ ॥

**गुञ्जेति** । मुकुन्दः । गुञ्जाकलापप्रतिनद्धकेशैः गुञ्जादामरूपेण विभूषणेन संयतकेशैः । 'कलापो भूषणे बर्हे तूणीरे संहतावपि' इत्यमरः । आगुल्फं गुल्फपर्यन्तम् । आलम्बितपिञ्छजालैः आलम्बितबर्हस्तबकैः । निषङ्गिभिः तूणीरधरैः । चारुपृषत्कचापैः मञ्जुशरचापैः । गोपसुतैः । गुप्तो बभौ परितः संवृतो भाति स्म ॥ २३ ॥

आक्रान्त्यकम्पेषु नगेषु धैर्यं
शौर्यक्रमं श्वापदविक्रमेषु ।
अशिक्षयत्क्षेमविदात्मभृत्या-
न्विहारगोपो मृगयापदेशात् ॥ २४ ॥

**आक्रान्तीति** । क्षेमवित् रक्षणीयानां रक्षणप्रकाराभिज्ञः । विहारगोपः कृष्णः । मृगयापदेशात् मृगयाव्याजात् । आत्मभृत्यान् स्वानुचरान् । आक्रान्त्यकम्पेषु स्वसंनाक्रमणेऽप्यकम्पमानेषु । नगेषु पर्वतेषु । धैर्यम् । श्वापदानां व्याघ्रवराहादिदुष्टसत्त्वानां विक्रमेषु । 'व्याघ्रादयो वनचराः पशवः श्वापदा मताः' इति हलायुधः । शौर्यक्रमं शौर्यपरिपाटीं च । अशिक्षयत् । परैराक्रमणे कृतेऽपि पर्वतवद्धैर्येण स्थातव्यम्, व्याघ्रादिव-

च्छौर्यक्रमोऽवलम्बनीय इति शिक्षयामासेत्यर्थः। शिक्षाया विद्योपादानरूपाया बुद्धिविशेषत्वाद्बुद्ध्यादिसूत्रेण द्विकर्मकता ॥ २४ ॥

**आदाय लूनानि मुकुन्दबाणैः**
**शृङ्गाणि शीघ्रं वनकासराणाम्।**
**शार्ङ्गप्रमाणानि शनैरकार्षु-**
**स्तैरेव चारूणि धनूंषि बालाः ॥ २५ ॥**

**आदायेति।** बालाः गोपकुमाराः। मुकुन्दबाणैः। लूनानि। शार्ङ्गप्रमाणानि शार्ङ्गं शृङ्गविकारभूतं धनुः तत्प्रमाणं येषां तानि, शार्ङ्गं कर्तुं पर्याप्तानीति यावत्। वनकासराणां वनमहिषाणाम्। शृङ्गाणि। शीघ्रम्। आदाय अहमहमिकया त्वरितं गृहीत्वा। तैः शृङ्गैरेव। चारूणि धनूंषि। शनैः क्रमेण। अकार्षुः कुर्वन्ति स्म। शृङ्गाणां स्वीयत्वापादनाय तद्ग्रहण एव तेषां त्वरा आसीत्, न तु चापनिर्माणे इति भावः ॥ २५ ॥

**मनुष्यमांसस्पृहया सरोषं**
**गुहान्तरादुत्पतितुं प्रवृत्तान्।**
**शिलीमुखैः कीलितशैलकण्ठा-**
**न्कृष्णस्तदा केसरिणश्चकार ॥ २६ ॥**

**मनुष्येति।** तदा। कृष्णः। मनुष्यमांसस्पृहया। सरोषं यथा तथा। गुहान्तरात् गुहावकाशात्। उत्पतितुं प्रवृत्तान्। केसरिणः सिंहान्। शिलीमुखैः बाणैः। कीलितशैलकण्ठान् कीलिताः शैला येषु ते, तथाभूताः कण्ठा येषां तथाभूतान्। चकार। गुहासु प्रारब्धोत्पतना अपि यथा मनुष्याणामुपरि नायान्ति, तथा तत्रैव शैलकीलितकंधरानकरोदित्यर्थः ॥ २६ ॥

नवाहृतैर्नाथपरिष्क्रियार्हां
गुञ्जास्रजं गोपकुमारवीराः ।
विभिन्नवन्यद्विपकुम्भमुक्तै-
र्मुक्ताफलैरन्तरयांबभूवुः ॥ २७ ॥

**नवाहृतैरिति** । गोपकुमारेषु वीराः श्रेष्ठाः । नवाहृतैः नवैरेवाहृतैः । विभिन्नवन्यद्विपकुम्भमुक्तैः विदलितवन्यगजकुम्भमुक्तैः । मुक्ताफलैः मौक्तिकैः । नाथपरिष्क्रियार्हां कृष्णस्य प्रसाधनोचिताम् । गुञ्जास्रज गुञ्जादामानम् । अन्तरयांबभूवुः तिरश्चक्रुः । गुञ्जादाम्नामुपरि मौक्तिकमालाभिः कृष्ण भूषयांबभूवुः ॥ २७ ॥

शराहतानां विपिने मृगाणा-
मार्द्राहृतैश्चर्मभिरात्तहर्षाः ।
अकल्पयन्नास्तरणानि गोपाः
संवेशयोग्यानि सहायिनीनाम् ॥ २८ ॥

**शराहतानामिति** । विपिने वने । शराहतानाम् । मृगाणां कृष्णसारादीनाम् । आर्द्राहृतैः आर्द्रैरेवाहृतैः । चर्मभिः त्वग्भिः । आत्तहर्षाः । गोपाः । सहायिनीनां सहचारिणीनाम् । अयतेस्ताच्छीलिको णिनिः । संवेशयोग्यानि सहशयनयोग्यानि । आस्तरणानि कुथान् । अकल्पयन् कल्पयामासुः । ‘प्रवेण्यास्तरण वर्णः परिस्तोमः कुथः कुथा’ इति हलायुधः ॥ २८ ॥

अभिन्नपार्श्वेष्ववकाशभेदा-
च्छिन्नस्थितीन्भीतिमपोह्य वत्सान् ।

निरस्तसिंहेषु गुहागृहेषु
न्यवीविशन्नाथनियोगभाजः ॥ २९ ॥

अभिन्नेति । नाथस्य कृष्णस्य नियोगभाजो भृत्याः । अभिन्नपार्श्वेषु अविदीर्णपार्श्वेषु, पार्श्वशैथिल्याभावाच्छिलादिपतनशङ्कारहितेषु । निरस्तसिंहेषु । गुहागृहेषु दरीरूपगृहेषु । अवकाशानां भेदात् अतिविपुलतया भिन्नावकाशित्वात् । भिन्नस्थितीन् परस्परमसंसृष्टावस्थानान् संमर्ददुःखरहितान् । वत्सान् । भीतिं अपोह्य सिंहादिभीतिमपनीय । न्यवीविशन् निवेशयामासुः ॥ २९ ॥

अयातयामैरचिरप्रतापा-
त्सुमृष्टपाकैरधिशल्यशृङ्गम् ।
मांसैर्मृगाणां मधुनावसिक्तै-
र्नन्दस्य भृत्या विपिने ननन्दुः ॥ ३० ॥

अयातयामैरिति । नन्दस्य । भृत्याः कर्मकराः । विपिने वने । अधिशल्यशृङ्गं शल्यशृङ्गे शराग्रे । सुमृष्टपाकैः । अचिरप्रतापात् सद्यो निष्टपनात् । अयातयामैः अगतरसैः । 'यातयामं गतरसम्' इत्यमरः । मधुना अवसिक्तैः क्षौद्रसिक्तैः । मृगाणां मांसैः । ननन्दुः नन्दन्ति स्म ॥

निवेद्यमानान्वनदेवताभिः
संगृह्य वन्यानुपदाविशेषान् ।
समं सुहृद्भ्यः सहसा विभेजे
रामानुरोधेन रमासहायः ॥ ३१ ॥

**निवेद्यमानानिति** । रमासहायः कृष्णः । वनदेवताभिः । निवेद्यमानान् अर्प्यमाणान् । वन्यान् वनभवान् । उपदाविशेषान् उपहारभेदान् । संगृह्य गृहीत्वा । रामानुरोधेन रामस्यानुवर्तनेन, तदनुमतिं लब्ध्वेति यावत् । 'अनुरोधोऽनुवर्तनम्' इत्यमरः । सहसा शीघ्रम्, उपहारग्रहणानन्तरमेव । समं यथा तथा । सुहृद्भ्यः । विभेजे ॥ ३१ ॥

**त्राणं सतां दुष्कृतिनां विनाशं**
**तन्वन्नभीष्टं मृगयाच्छलेन ।**
**स्वच्छन्दचर्यानुगुणं गवां त-**
**च्चक्रे वनं शान्तमृगावशेषम् ॥ ३२ ॥**

**त्राणमिति** । मृगयाच्छलेन । अभीष्टं स्वाभिमतम् । सतां साधूनाम् । त्राणम् । दुष्कृतिनां पापिनाम् । विनाशं च । तन्वन् 'परित्राणाय साधूनां विनाशाय च दुष्कृताम्' इति स्वावतारप्रयोजनं संपादयन् । देवः । शान्तमृगावशेषं हरिणादिसौम्यमृगमात्रावशेषम्, व्याघ्रादीनां हतत्वादिति भावः । तत् वनम् । गवाम् । स्वच्छन्दचर्यानुगुणं स्वैरचर्यानुकूलम् । चक्रे ॥ ३२ ॥

**निसर्गकारुण्यतरङ्गवृत्त्या**
**निर्वैरतां नैगमगोपदृष्ट्या ।**
**संप्रापिताः प्रापुरिवैकजात्यं**
**केचिद्गवां केसरिदन्तिमुख्याः ॥ ३३ ॥**

**निसर्गेति** । करुणैव कारुण्यं । चतुर्वर्णादित्वात्स्वार्थे ष्यञ् । निसर्गकारुण्यस्य स्वभावसिद्धकरुणायाः तरङ्गवृत्त्या तरङ्गस्य वृत्तिरिव वृत्तिर्यस्या-

स्तथाभूतया । नैगमगोपदृष्ट्या नैगमो निगमसंबन्धी श्रुतिसिद्धो गोपः । यद्वा नैगमा उपनिषद्भागाः । 'नैगमः स्यादुपनिषद्वणिजोर्नीपितेऽपि च ।' इति विश्वः । तत्सिद्धो गोप इति मध्यमपदलोपी समासः । तस्य कृष्णस्य दृष्ट्या । निर्वैरतां संप्रापिताः । केचित् केसरिदन्तिमुख्याः सिंहगजप्रभृतयो हिंस्राः । गवाम् । ऐकजात्यं प्रापुरिव । कटाक्षपातेन निर्वैरतां प्रापय्य लीलार्थं विमुक्ताः केचन हिंस्राः गोभिः सह तदविशेषेण चेरुरित्यर्थः ॥

विधून्वता धूलिकदम्बरेणू-
न्धाराकदम्बाङ्कुरकारणेन ।
निन्युः श्रमं निर्झरबिन्दुभाजा
नभस्वता नन्दसुतानुयाताः ॥ ३४ ॥

विधून्वतेति । नन्दसुत कृष्णं अनुयाताः गोपसुताः । धूलिकदम्बः कदम्बविशेषो यो वसन्ते समुल्लसति, तस्य रेणून् तत्पुष्पपरागान् ग्रीष्मेऽप्यनुवर्तमानान् । विधून्वता कम्पयता । धाराकदम्बाङ्कुरकारणेन नेदीयसि वर्षाकाले भाविनां वृष्टिधारानिकुरुम्बाणामुदयस्य कारणेन 'वायुर्वै वृष्ट्या ईशः' इति श्रुतेः । निर्झरबिन्दुभाजा गिरिनिर्झराणां बिन्दून् भजता । नभस्वता वायुना । श्रमं निन्युः अपनयन्ति स्म ॥ ३४ ॥

अमर्त्ययक्षेश्वरधामभाजो-
रारामयोरेकमिवावतारम् ।
प्रशान्तघर्मातिशयं प्रभावा-
द्वृन्दावनं नन्दसुतो वितेने ॥ ३५ ॥

अमर्त्येति । नन्दसुतः कृष्णः । अमर्त्ययक्षेश्वरधामभाजोः अमर्त्यानां

यक्षाणां च क्रमादीश्वराविन्द्रकुबेरौ, तयोर्धामनी अमरावत्यलके ते भजतोः । आरामयोः नन्दनचैत्ररथयोः । एकम् अवतारमिव स्थितम् । वृन्दावनम् । प्रभावात् स्वमहिम्ना । प्रशान्तघर्मातिशयम् । वितेने ॥३५॥

दिशं समाक्रम्य करैरुदीचीं
देवे रवौ दक्षिणतः प्रवृत्ते ।
निदाघक्लृप्त्या निगृहीतदेहां
वृष्टिं पुनः स्रष्टुमियेष शौरिः ॥ ३६ ॥

**दिशमिति** । देवे । रवौ सूर्ये । उदीचीं दिशम् । करैः किरणैः । समाक्रम्य । दक्षिणतः दक्षिणस्यां दिशि । प्रवृत्ते, दक्षिणायनारम्भे सति । 'दक्षिणोत्तराभ्यामतसुच्' इति सप्तम्यर्थे अतसुच् । निदाघक्लृप्त्या घर्मकालसृष्ट्या । निगृहीतदेहां उपसंहृतरूपाम्, घर्मकाले सर्वात्मना लुप्ताम् । वृष्टिम् । पुनः स्रष्टुम् । शौरिः । इयेष । यथा देवो राजा परसीमोपप्लवार्थं प्रस्थितः करग्रहणेन समन्तादाक्रम्य पीडयति, तथा ग्रीष्मवशादत्यन्तं द्योतमानतया देवे सूर्ये किरणप्रचारेण उदीचीं समाक्रम्य दिगन्तरे प्रस्थिते भगवान् तदुपप्लवनिवर्तनेन लोकरक्षार्थं तत्करमान्द्यापादकवृष्टिं स्रष्टुमियेषेति भावः प्रतीयते ॥ ३६ ॥

अथाविरासीदपसारयन्ती
तापं गवां चण्डकरप्रसूतम् ।
विचित्रसस्योदयमेचकाङ्गी
मेघाविला माधवयोगवेला ॥ ३७ ॥

**अथेति** । अथ भगवत्संकल्पानन्तरम् । मेघाविला मेघकलुषा । चण्ड-

करप्रसूत आदित्यसभूतम् । गवा तापम् । अपसारयन्ती अपनयन्ती । विचित्राणा नानारूपाणा सस्यानां ओषधीनां उदयेन मेचकाङ्गी श्यामलाकारा । माधवस्य क्षीराब्धिशायिनो देवस्य योगवेला योगनिद्रासमयः । आविरासीत् ॥ ३७ ॥

**महीभृतः संभृततीर्थतोयै-**
**रम्भोधरैराचरिताभिषेकाः ।**
**प्रयुक्तविद्युद्वलयैः पुनस्तैः**
**प्रायेण नीराजनमन्वभूवन् ॥ ३८ ॥**

**महीभृत इति** । सम्भृततीर्थतोयै आहृतसमुद्राम्बुरूपपावनसलिलै । 'तीर्थं मन्त्राद्युपाध्यायशास्त्रेष्वम्भसि पावने' इति यादवः । अम्भोधरै मेघै । राजाभिषेकाय गङ्गादितीर्थतोय ये कुम्भैर्धारयन्ति तेऽप्यम्भोधरशब्देन योगतः प्रतीयन्ते । तै., आचरिताभिषेका कृताभिषेका । महीभृत पर्वताः । राजान इत्यपि शब्दशक्त्या प्रतीयते । पुन प्रयुक्तविद्युद्वलयै । 'पुनरप्रथमे भेदे' इति विद्युत्प्रयोगस्य द्वितीयक्रियाद्योतकः पुन. शब्द । तैः अम्भोधरै । प्रायेण । नीराजन आरात्रिकम् । अन्वभूवन् । 'अन्तर्धौ येनादर्शनम्' इतिवद्गम्यमानार्थसद्भावात्तैरिति तृतीया, हेतुतृतीया वा । वृष्टयनन्तर विद्युदुदय· अभिषेकानन्तरमारात्रिकमङ्गलवज्जात इत्यर्थ· । अत्र महीभृत इत्यादिश्लेषानुप्राणितस्तटितां नीराजनत्वोत्प्रेक्षालङ्कारः ॥ ३८ ॥

**धौतावदातैः क्रकचच्छदानां**
**पत्रैरविश्रान्तषडङ्घ्रिनादैः ।**

व्यदारयत्पुष्पशरः प्रतूर्णं
मानग्रहं मानवतीजनानाम् ॥ ३९ ॥

**धौतेति** । पुष्पशरः कामः । धौतैः वृष्टया क्षालितैः अवदातैः शुभ्रैश्च । अविश्रान्तषडङ्घ्रिनादैः अविरतभृङ्गनादैः । क्रकचच्छदानां क्रकचाकाराः करपत्राकाराः छदा येषां ते क्रकचच्छदाः केतकीवृक्षाः तेषाम् । पत्रैः । मानवतीजनानां मानः प्रियविषयरत्यवस्थाविशेषः । 'अङ्कुरपल्लवकलिकाकोरकफलभोगभागियं क्रमशः । प्रेमा मानः प्रणयः स्नेहो रागोऽनुराग इति ।' इति रतिं प्रस्तुत्य रसार्णववचनात् । तद्वत्यः प्रणयिन्यः तासामेव जनानाम् । मानग्रहं 'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये ।' इत्युक्तलक्षणकोपविशेषग्रहणम् । प्रतूर्णं अतिशीघ्रम् । व्यदारयत् । यथा धौतावदातैरुत्तेजिततया निर्मलैर्विदारणसमये शब्दायमानैः करपत्रैर्दारुखण्डं विदारयन्ति तद्वदिति भावः । 'धौते निशातं निशितं क्ष्णुतं तेजितमर्थवत्' 'अवदातः सिते पीते शुद्धेऽपि' इति च वैजयन्ती ॥ ३९ ॥

पयोमुचा सेकवतां स्थलानां
वीरुत्प्ररोहा विविधा बभूवुः ।
समीक्षितानां मधुसूदनेन
श्रद्धादयाद्या इव सद्गुणौघाः ॥ ४० ॥

**पयोमुचेति** । पयोमुचा मेघेन हेतुना, सेकवतां मेघसिक्तानाम् । स्थलानाम् । विविधाः । वीरुत्प्ररोहाः प्रतानिनीनां लतानामङ्कुराः । 'लता प्रतानिनी वीरुत्' इत्यमरः । मधुसूदनेन । समीक्षितानां कटाक्षितानां पुंसाम् ।

श्रद्धादयाद्याः आस्तिक्यबुद्धिकृपादान्तिभक्तिवैराग्यप्रमुखाः। सद्गुणौघाः उत्तमगुणनिवहा इव। बभूवुः जाता इत्यर्थः ॥ ४० ॥

**शितेन पञ्चेषुशरेण भिन्ना-**
**द्वियोगिनीमानसतो विकीर्णाः।**
**तदेन्द्रकोपत्वमिवाधिजग्मुः**
**शोणाः क्षितौ शोणितबिन्दुभेदाः ॥ ४१ ॥**

**शितेनेति**। तदा वर्षासमये। शितेन उत्तेजितेन। पञ्चेषुशरेण मन्मथबाणेन। भिन्नात् विदारितात्। वियोगिनीमानसतः विरहिणीनां मानसात्। 'अपादाने चाहीयरुहोः' इति पञ्चम्यास्तसिः। क्षितौ। विकीर्णाः विप्रसृताः। शोणाः रक्तवर्णाः। शोणितबिन्दुभेदाः असृक्कणविशेषाः। इन्द्रकोपसमानाकृतिमत्त्वरूपाभिप्रायेण बिन्दुषु भेदशब्दः। इन्द्रकोपत्वं इन्द्रकोपाख्यवर्षाप्रभवजन्तुविशेषत्वम्। अधिजग्मुः प्रापुरिव। तदा भूमौ संचरन्तः शक्रकोपकृमयः उक्तरूपाः शोणितबिन्दव इव रेजुरित्यर्थः। अत्र शक्रकोपेषु उक्तरूपशोणितबिन्दुत्वरूपसंभावनारूपोत्प्रेक्षालङ्कारः। यद्यप्यत्र शब्दगत्या शोणितबिन्दुष्विन्द्रकोपत्वोत्प्रेक्षैव प्रतीयते, तथापि यथा 'दध्ना जुहोति' इत्यत्राप्राप्तपक्षपाती विधिः शब्दगत्या प्राप्तहोमानुरक्तत्वेन प्रतीयमानोऽप्यप्राप्ते दध्न्येव संचार्यते; एवमुत्प्रेक्षाया सिद्धस्याधिष्ठानत्वमसिद्धस्याध्यवसेयत्वं च युक्तमित्यसिद्धपक्षपातिन्युत्प्रेक्षा सिद्धानुरक्ततया प्रतीयमानाप्यसिद्धे संचारणीयेति सिद्धशक्रकोपाधिष्ठाना असिद्धशोणितबिन्दूत्प्रेक्षैव ग्राह्या। समतश्चायमध्वरमीमांसकानां न्यायः साहित्यमीमांसकानामपि। 'ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम्। प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं ततान'

इति समासोक्त्युदाहरणे आर्द्रनखक्षताभमैन्द्रं धनुः पाण्डुपयोधरेण दधानेति विशेषणानामप्रकृतनायिकाविशेषपरत्वमुपपादयतालंकारसर्वस्वकारेण "आर्द्रनखक्षताभमित्यत्र स्थितमपि श्रुत्योपमानत्वमैन्द्रधनुषि संचारणीयं 'इन्द्रचापाभं नखक्षत दधाना' इति, यथा 'दध्ना जुहोति' इत्यादौ दध्नि संचार्यते विधिः" इति समर्थनादिति ॥ ४१ ॥

**मधुद्रुतेरुल्बणदन्तवीणा**
**मेघानिले मेदुरबिन्दुजाले ।**
**प्रभूतकम्पाः प्रथयांबभूवुः**
**शीतालुतां कण्टकिनः कदम्बाः ॥ ४२ ॥**

**मधुद्रुतेरिति** । मेदुर सान्द्रस्निग्धं बिन्दुजालं वृष्टिकणबृन्द यस्मिन् । 'सान्द्रस्निग्धस्तु मेदुरः' इत्यमरः । तस्मिन् मेघानिले सति । मधुद्रुतेः मकरन्दद्रवात् । उल्बणदन्तवीणाः शीतासहिष्णुतया कम्पमानदन्ताः दन्तवीणाशब्देनोच्यन्ते । उल्बणाः प्रव्यक्ताः दन्तवीणा येषां ते तथोक्ताः । 'स्फुटं प्रव्यक्तमुल्बणम्' इत्यमरः । इह वाताहतमकरन्दबिन्दुचलनमेव दन्तपङ्क्तिकम्पस्थाने जातमिति भावः । प्रभूतकम्पाः साङ्गकम्पाः । कण्टकिनः तीक्ष्णाग्रावयववन्तः रोमाञ्चवन्तश्च । 'सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः' इत्यमरः । कदम्बाः नीपवृक्षाः । शीतालुतां शीतासहिष्णुत्वम् । 'शीतोष्णाभ्यां तदसहने' इत्यालुच्प्रत्ययः । प्रथयांबभूवुः प्रकाशयामासुः । अत्र कदम्बानां कण्टकित्वादिनिमित्तोत्थापिता तादृशशीतालुत्वोत्प्रेक्षणादुत्प्रेक्षा । सा च वाचकाप्रयोगाद्गम्येति **गम्योत्प्रेक्षालंकारः** ॥ ४२ ॥

**शतह्रदाशस्त्रविलासदीप्ता**
**धीरप्रणादा धृतचित्रचापा ।**

कनद्बलाकाध्वजपङ्क्तिरासी-
त्कादम्बिनी कामचमूरपूर्वा ॥ ४३ ॥

शतह्रदेति । शतह्रदा विद्युत एव शस्त्राणि खड्गादीनि, तेषां विलासेन चाञ्चल्यरूपेण दीप्ता उज्ज्वला । धीरप्रणादा गम्भीरशब्दा । एकत्र गर्जितरूपः शब्दः अन्यत्र हेषाबृंहितसिंहनादादिरूपः । धृतचित्रचापा धृतनानारूपचापा । एकत्रेन्द्रचापोऽन्यत्र प्रसिद्धः । कनद्बलाकाध्वजपङ्क्तिः बलाकाः पक्षिविशेषा एव ध्वजाः । 'बलाका बिसकण्ठिका' इत्यमरः । कनन्ती दीप्यमाना बलाकाध्वजानां पङ्क्तिर्यस्याम् । 'कन दीप्तौ' इति धातुः शत्रन्तः । सा कादम्बिनी मेघमाला । अपूर्वा कामचमूः आसीत् । उद्दीपनविभावत्वात् । सावयवरूपकालङ्कारः ॥ ४३ ॥

मृदङ्गधीरस्तनितो विहायाः
सौदामिनीसंभृतचारुलास्यः ।
बभौ नवानां प्रभवो रसानां
रतिप्रियस्येव नटस्य रङ्गः ॥ ४४ ॥

मृदङ्गेति । मृदङ्गधीरस्तनितः मुरजध्वानगम्भीरगर्जितः । मृदङ्गशब्देन तद्ध्वानो लक्ष्यते । सौदामिनीसंभृतचारुलास्यः तडित्संपादितचारुनर्तनः । नवानां नूतनानां रसानां जलानाम् । पक्षे नवसंख्याकानां शृङ्गारादिरसानाम् । प्रभवः उत्पत्तिभूः । विहायाः आकाशः । 'वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी' इति पुल्लिङ्गता । रतिप्रियः कामः स एव नटः तस्य रङ्ग इव नृत्तस्थानमिव । बभौ । 'रङ्गो रणखले रागे नृत्तस्थाने त्रपुण्यपि' इति विश्वः । अत्र मृदङ्गधीरस्तनित इत्युपमा । सौदामिनीसंभृतचारुलास्य इति तडिच्चलने लास्यत्वाध्यवसायरूपाति-

शयोक्तिः । नवानां रसानां प्रभव इति श्लेषः । एतैरनुप्राणितो विहायसो रङ्गत्वोत्प्रेक्षणादुत्प्रेक्षालङ्कारः ॥ ४४ ॥

अचिन्तितोपस्थितजीवनाना-
मासेदुषामभ्यधिकां समृद्धिम् ।
तोयाशयानां परिवाहजन्या
स्वगुप्तिरन्योपचयप्रदाभूत् ॥ ४५ ॥

**अचिन्तितेति** । अचिन्तितोपस्थितजीवनानां झटिति महावर्षादतर्कितोपनतजलानाम् । 'जीवनं वर्तने नीरे पुत्रजीवे तु जीवनः' इति विश्वः । अत एव अभ्यधिकां अतिशयिनीम् । समृद्धिं पूर्णताम् । आसेदुषां प्राप्तवताम् । तोयाशयानां तटाकानाम् । परिवाहजन्या परिवाहशब्देन तटाकानामत्यन्तपूर्तौ कूलनिर्भेदेन सर्वजलक्षयभिया क्वचित्क्रियमाणा जलैकदेशनिर्गमनमार्गा विवक्षिताः । 'जलोच्छ्वासाः परीवाहाः' इत्यमरः । तैर्जन्या । स्वगुप्तिः आत्मरक्षा । अन्योपचयप्रदा अभूत् तटाकान्तराणामपि वृद्धिप्रदाभूत्, परिवाहजलानां तटाकान्तरेषु निपातादिति भावः । अत्रान्यदपि ध्वन्यते । जीव्यतेऽनेनेति जीवनं धनम्, तत् अचिन्तितोपस्थितं येषां तेषां तेन धनेनाभ्यधिकां मनोरथातिशायिनीं समृद्धिं प्राप्तानाम् । तोयाशयानामित्यनेन सन्तः प्रतीयन्ते । तेषां परिवाहजन्या स्वगुप्तिः । परिवाहशब्देन त्यागो गम्यते । तज्जन्या स्वानामर्थानां गुप्ती रक्षा । 'स्वोऽस्त्री धने त्रिषु स्वीय आत्मनि स्वजने तु ना' इति वैजयन्ती । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इति चामरः । अर्थानां नाशापहारादिभिः सदा शङ्कितक्षयाणां त्यागादेव हि यशःपुण्यसंपादनेन रक्षा भवति । सा अन्येषां पात्रभूतानामुपचयप्रदेति ।

ततश्चास्याप्रकृतार्थस्य प्रकृतार्थोपमानतया प्रतीतेः शब्दशक्तिमूल **उपमालङ्कारध्वनिः** ॥ ४५ ॥

**गुहासु गोवर्धनसंभवासु**
**प्रकामविस्तीर्णसमस्थलीषु ।**
**गुणाधिको विश्वसृजा प्रवर्षे**
**वासः समाधीयत वल्लवानाम् ॥ ४६ ॥**

**गुहास्विति** । विश्वसृजा कृष्णेन । प्रवर्षे महावर्षे, महावृक्षाधःप्रदेशादावप्यवस्थातुमयोग्ये इति भावः । वल्लवानां गोपानाम् । गोवर्धनसंभवासु गोवर्धनगिरौ विद्यमानासु । प्रकामविस्तीर्णसमस्थलीषु अतिविशालसमभूतलासु । गुहासु । गुणाधिकः कवोष्णत्वादिगुणोत्तरः । वासः । समाधीयत समातन्यतेत्यर्थः ॥ ४६ ॥

**दरीषु गोप्यः प्रसमीक्ष्य कृष्णं**
**दिशासु जीमूतगणं मयूर्यः ।**
**अग्रे पतीनामधिगीतिनादं**
**वितेनिरे चारु विहारलास्यम् ॥ ४७ ॥**

**दरीष्विति** । गोप्यः गोपाङ्गनाः । दरीषु कन्दरासु । कृष्णम् । मयूर्यः मयूरवनिताः । दिशासु । जीमूतगणं मेघगणं च । प्रसमीक्ष्य दृष्ट्वा । पतीनां स्वभर्तृणाम् । अग्रे पुरतः । अधिको गीतिनादो यस्मिंस्तत्तथोक्तम् । मयूरीणां केकारव एव गीतिनादोऽभिसंहितः । चारु सुन्दरम् । विहारलास्यं विहारः शृङ्गारचेष्टैव लास्यं नृत्तम् । मयूरीपक्षे विहारेण लीलया लास्यम् । तत्, वितेनिरे चक्रुः । अत्र वर्षावर्णनान्तर्गततया

मयूरीवृत्तान्तस्य भगवच्चरितवर्णनान्तर्गततया गोपीवृत्तान्तस्य च प्रकृतत्वात् प्रस्तुतयोरेकक्रियान्वयरूपस्तुल्ययोगितालङ्कारः । 'प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः । औपम्यं गम्यते यत्र सा मता तुल्ययोगिता ।' औपम्यस्य गम्यत्वं तु प्रकृतत्वाविशेषेऽपि वैवक्षिकमुपमानोपमेयभावं कल्पयित्वा मयूर्य इव गोपिका अपि स्वपतीनामग्रत एवांधिगीतिनादं चारु लास्यं वितेनिर इति वर्णनीयम् । तेन तासामत्यन्तमदनपारवश्याभिव्यक्त्या भगवतो लोकोत्तरसौन्दर्यविभ्रमादिर्व्यज्यते ॥

**पयोदलक्ष्यप्रहिताग्रहस्तां**
**कृष्णः स्वनेत्रे इव चन्द्रसूर्यौ ।**
**तिरोदधानां प्रतिरोद्धुमैच्छ-**
**त्स्वैरी स्वलीलामिव जातलीलाम् ॥ ४८ ॥**

**पयोदेति** । स्वैरी स्वतन्त्रः । कृष्णः । पयोदलक्ष्यप्रहिताग्रहस्तां मेघव्याजेन प्रेषितहस्ताग्राम् । स्वनेत्रे इव चन्द्रसूर्यौ तिरोदधानाम् । अत एव, जातलीलां संजातनयनपिधानक्रीडाम् । स्वलीलां स्वस्य लीलाकरीं देवीमिव स्थिताम् । प्रावृषमित्यौचित्याद्विशेष्यं लभ्यते । अत एव गम्यमानत्वादप्रयोगः । प्रतिरोद्धुं निरोद्धुम् । ऐच्छत् । नयनपिधानक्रीडायामसाविति ज्ञातेऽपि तत्परितोषायाज्ञानमभिनीय तत्करमपवारयन्ति तद्वदिति भावः । अत्र पयोदे नेत्रकल्पचन्द्रसूर्याच्छादकत्वेन हस्ताग्रत्वारोपरूपापह्नुतिरिति तदनुप्राणित **उपमालङ्कारः** । लीलाहेतुत्वादेव्यां लीलात्वाध्यवसायः । लीलाशब्दात्तत्करोतिण्यन्तात्पचाद्यचि लीलाशब्द एव लीलाहेतुवाची वा । 'ईदूदेद्विवचनं प्रगृह्यम्' इति प्रगृह्यसंज्ञा । तेन

नेत्रे इवेति प्रकृतिभावः ॥ ४८ ॥ (' स्वलीलामिव वर्षवेलाम् ' इत्येकस्मिन् तालपत्रपुस्तके पाठो दृश्यते ।)

**अथाञ्जनस्निग्धनभःप्रकाशाः**
**क्षणत्विषां कल्पितलास्यभङ्गाः ।**
**दिशामुखोल्लासनदृष्टदाक्ष्या**
**दीनाम्बुवाहा दिवसा बभूवुः ॥ ४९ ॥**

**अथेति** । अथ भगवत्सङ्कल्पानन्तरम् । अञ्जनस्निग्धनभःप्रकाशाः मेघकालुष्यापगमादञ्जनवत् स्निग्धो मसृणो नभसः प्रकाशः स्फुटीभावो येषु ते । क्षणत्विषां विद्युताम् । कल्पितलास्यभङ्गाः कृतस्फुरणभङ्गाः । दिशामुखानामुल्लासने निर्मलीकरणे दृष्टदाक्ष्या दृष्टसामर्थ्याः । दीनाम्बुवाहाः गर्जिताटोपवैकल्येन कातरमेघाः । दिवसाः शारदाः । बभूवुः ॥४९॥

**अलक्ष्यतीव्रातपमन्तरिक्षं**
**सितासितैरम्बुधरैश्चकाशे ।**
**विवेकमासादयतामिवादौ**
**चित्तं वितर्कैरनिवर्तमानैः ॥ ५० ॥**

**अलक्ष्येति** । अलक्ष्यतीव्रातपम् अदृश्यमानस्फीतातपम् । अन्तरिक्षम् । सितासितैः प्रावृट्कालावसानतया अत्यन्तमनुच्छेदाद्धवलमेचकरूपैः । अम्बुधरैः । आदौ प्रथमम् । शास्त्रश्रवणेन विवेकं कोमलकण्टकायमानमात्मतत्त्वावबोधम् । आसादयतां प्राप्नुवताम् । चित्तम् अन्तःकरणम् । अनिवर्तमानैः स्थिरतरसंस्कारवशात्सर्वथा निवृत्तिरहितैः । वितर्कैः संभावनारूपैः संदेहैरिव । चकाशे । मन्दतापम् अप्रौढविवे-

कवत्स्थितः, सितासिताश्च मेघाः तत्त्वातत्त्वकोटिद्वयावगाहिवितर्कवज्जाता इति भावः ॥ ५० ॥

**विहाय सद्यः कुटजार्जुनादी-**
**न्विप्लावितान्कालविपर्ययेण ।**
**पुनर्बबन्धुः प्रणयं द्विरेफाः**
**कोशोपपन्नेषु कुशेशयेषु ॥ ५१ ॥**

**विहायेति** । द्विरेफाः । कालविपर्ययेण कालवैपरीत्येन, क्षयकालागमनेनेति यावत् । विप्लावितान् अन्यथाकृतान् क्षीणीकृतान् । कुटजार्जुनादीन् गिरिमल्लिकाककुभप्रभृतीन् । सद्यः । विहाय त्यक्त्वा । पुनः । कोशोपपन्नेषु मुकुलयुक्तेषु । कुशेशयेषु तामरसेषु । प्रणयं परिचयं सौहृदं वा । ‘ प्रणयः स्यात्परिचयो याच्ञायां सौहृदेऽपि च ’ इति वैजयन्ती । बबन्धुः चक्रुरित्यर्थः । यथा सेवाकुशलाः पुरुषाः कालवशात्क्षीणान्प्रभून्विहाय पुनरपि समृद्धकोशानन्यान्प्रभूनाश्रयन्ते, तद्वदिति गम्यते ॥५१॥

**तरङ्गलोलाम्बुजतालवृन्ता**
**बर्हातपत्रायितभृङ्गयूथाः ।**
**विधूतहंसावलिचामरौघा**
**नद्यः समातन्वत नाथसेवाम् ॥ ५२ ॥**

**तरङ्गेति** । तरङ्गैर्लोलानि चलानि अम्बुजानि तालवृन्तानि व्यजनानीव यासु । बर्हातपत्रायितानि मयूरपिच्छातपत्रवदाचरितवन्ति भृङ्गयूथानि भ्रमरवृन्दानि यासु । विधूताः कम्पिताः हसावलयो हंसपङ्क्तयः चामरौघा इव याभिः । ताः नद्यः । नाथस्य कृष्णस्य सेवाम् । समातन्वत । यथा

तालवृन्तादिभिः परिचारिकाः राज्ञः सेवां कुर्वन्ति, तथेति भावः ॥ ५२ ॥

**तापानुबन्धप्रशमाय पुंसां**
**शय्यार्थिना शार्ङ्गभृतोपहूता ।**
**पयोदमालाव्यपदेशदृश्या**
**प्रायस्तिरोऽधीयत योगनिद्रा ॥ ५३ ॥**

**तापेति** । पुंसाम् । तापानुबन्धप्रशमाय तापानुवृत्तिप्रशान्तये । शय्यार्थिना शयनमर्थयमानेन । शार्ङ्गभृता कृष्णेन । उपहूता । पुंसामन्तरात्मनो भगवतः शय्यया तेषां श्रमरूपतापः शाम्यतीति भावः । पयोदमालाव्यपदेशदृश्या मेघपङ्क्तिव्याजेन दृग्गोचरीभूता । योगनिद्रा । प्रायः नूनम् । तिरोऽधीयत तिरोहिताभूत् । कर्मणि लङ् । शार्ङ्गभृतेति कर्तुरत्राप्यन्वयः । यद्वा 'धीङ् आधाने' इति धातोर्दैवादिकात्कर्तरि लङ् । मेघपङ्क्तितिरोधानमेव शरत्कालोचितं भगवद्योगनिद्रातिरोधानमुत्प्रेक्ष्यते, पयोदमालाव्यपदेशदृश्येत्यपह्नूयते चेति **सापह्नवोत्प्रेक्षालङ्कारः** ॥ ५३ ॥

**इतस्ततः प्राप्तशरद्विहारं**
**गोपीसखं द्रष्टुमतीव हर्षात् ।**
**अशोभि नेत्रैरिव जृम्भमाणैः**
**शीर्णैर्धरित्री शिखिनां कलापैः ॥ ५४ ॥**

**इतस्तत इति** । धरित्री । इतस्ततः बृन्दावने तत्र तत्र प्रदेशे । प्राप्तशरद्विहारं प्राप्तः शरत्कालयोग्यो विहारः क्रीडा येन तम् । गोपीसखं गोपीनां सखायम्, ताभिः सह क्रीडन्तम् । तं द्रष्टुम् । अतीव हर्षात् अत्यन्तकौ-

तुकादिव । जृम्भमाणैः । नेत्रैरिव स्थितैः । शीर्णैः । शिखिनां मयूराणाम् । कलापैः । अशोभि शोभ(भ्य)ते स्म । अत्र नेत्रैरिवेति मयूरकलापेषु नेत्रतादात्म्यसंभावनारूपा **स्वरूपोत्प्रेक्षा** एका । अतिहर्षादिवेति तद्विजृम्भणहेतूत्प्रेक्षान्येति तद्द्वयव्यञ्जकतया प्रत्येकमिव शब्दः, यथा अनेकेवोपमायामवयवेषु प्रत्येकमुपमाव्यञ्जकतया ; ततो नाधिक्यमाशङ्कनीयम् ॥

**चराचरेष्वाहितजीवनाना-**
**मनुज्झतां सत्पथमम्बुदानाम् ।**
**शुचित्वमन्तर्बहिरप्ययत्ना-**
**दभ्यागतैर्हंसगणैः शशंसे ॥ ५५ ॥**

**चराचरेति** । चराचरेषु जगत्सु । 'चराचरं स्याज्जगति वाच्यवज्जङ्गमेभयोः' इति विश्वः । आहितजीवनानां अभिवृष्टजलानाम् । सत्पथं नक्षत्रपथं । अनुज्झतां अत्यजतां । अम्बुदानां । अन्तर्वहिश्च शुचित्वं धवलत्वं । अभ्यागतैः मानसात् सरसः समागतैः । हंसगणैः । अयत्नात् । शशंसे अनायासादूचे । कर्मणि लिट् । हंसागमनेन शरत्कालनिश्चयात् मेघदर्शनयत्नं विनैव तेषां धावल्यमवसेयमासीदित्यर्थः । अत्र विशेषणसाम्यात् सत्पुरुषवृत्तान्तोऽपि प्रतीयते । जगत्सु । आहितजीवनानां दत्तवृत्त्युपयोग्यन्नपानादीनां सन्मार्गमत्यजताम् । अन्तर्बहिश्च शुचित्व मनसि वाक्काययोश्च शुद्धत्वम् । अभ्यागतै अतिथिभूतैः हंसगणैः योगिसङ्घैः अयत्नात् शशंसे । विदितसकलवेद्या योगिनः शुद्धेष्वेवातिथ्यं अङ्गीकुर्वन्तीति तदातिथ्येन तेषां शुचित्व स्पष्टीकृतमिति एवं चात्र **समासोक्तिरलङ्कारः** । 'शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोः सिते ।' 'हंसो विहगभेदे स्यादर्के विष्णौ हयान्तरे । योगिमन्त्रात्मभेदेषु परमात्मनि मत्सरे' इति च विश्वः ॥

संस्कारभेदैः कलमादिकानां
क्रमेण लब्धोपचयस्थितीनाम् ।
समुन्नतिः सन्नतिहेतुरासी-
द्धर्मं निजं साधयितुं क्षमाणाम् ॥ ५६ ॥

**संस्कारेति** । संस्कारभेदैः उत्खातप्रतिरोपणावकरक्षेपाद्युपस्कारविशेषैः । क्रमेण । लब्धोपचयस्थितीनां लब्धाभिवृद्धिकावस्थानानाम् । अत एव निजं धर्मं, कणिशोत्पादनादिरूप ओषधिस्वभावम् । साधयितुं संपादयितुम् । क्षमाणां शक्तानाम् । कलमादिकानां कलमाः ओषधिविशेषाः तत्प्रभृतीनां सस्यानाम् । समुन्नतिः समुच्छ्रायः । सन्नतिहेतुः आसीत् फलभारेण भविष्यन्त्या अवनतेः कारणमासीत् । यथा जातकर्मादिपुरुषसंस्कारविशेषैः क्रमेण लब्धाभिवृद्धिकवैदिकमर्यादानाम्, अत एव स्वोचितसंस्कारलाभात् निजवर्णाश्रमधर्मं अनुष्ठातुं क्षमाणां योग्यानां सत्पुरुषाणां, समुन्नतिर्विद्यावृत्तसंपन्नतारूपा महत्ता सन्नतिहेतुः प्रश्रयहेतुः ; तद्वदिति भावः । अत्रापि विशेषणसाम्यात् अप्रस्तुतवृत्तान्तप्रतीतेः **समासोक्तिरलङ्कारः** । 'स्थानमर्यादयोः स्थितिः' इति 'योग्यशक्तहिताः क्षमाः' इति च यादवः ॥ ५६ ॥

विहारगोपस्य गुणान्गृणद्भिः
क्षीबाशया गीतपदैरुदारैः ।
चक्रासुरासादितभक्तिभेदाः
सामोपशाखा इव शालिगोप्यः ॥ ५७ ॥

**विहारेति** । क्षीबाशयाः मत्तचित्ताः । शालीन् शरत्पक्वान् गोपय-

न्तीति शालिगोप्यः सस्यरक्षिकाः स्त्रियः। सामोपशाखा इव सामवेदस्य शाखाप्रभेदा इव । आसादितभक्तिभेदाः प्राप्तभक्तिविशेषाः सत्यः । 'महनीयविषयिणी प्रीतिर्भक्तिः' इति कृष्णे तासां रागरूपा प्रीतिरिह भक्तिविशेषः। सामशाखापक्षे प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनानि पञ्च भक्तयः साम्नां प्रस्तोतृप्रतिहर्त्रादिगेयांशविभागाः । विहारेण गोपस्य कृष्णस्य। गुणान् । गृणद्भिः स्तुवद्भिः । उदारैः । गीतपदैः गानक्रियायुक्तैः पदैः । चकासुः चकाशिरे । 'चकासृ दीप्तौ' इति धातोर्लङ् 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस् । अडागमाभावस्त्वागमविधेरनित्यत्वात्समाधेयः । यथा सामशाखाः कृष्णगुणान् गृणद्भिः पुरुषव्रतादिगीतपदैः प्रकाशन्ते, एवमुक्तरूपैर्लौकिकगीतपदैश्चकाशिर इत्यर्थः ॥ ५७ ॥

**विकस्वरेन्द्रायुधबर्हदाम्नः**
**श्यामीकृतं कृष्णघनस्य धाम्ना ।**
**शरत्प्रसङ्गेऽपि तदा तदासी-**
**द्वृन्दावनं बद्धमयूरलास्यम् ॥ ५८ ॥**

**विकस्वरेति** । विकस्वरं विकसनशील इन्द्रायुधं इन्द्रधनुरिव बर्हदाम यस्य तस्य । कृष्णघनस्य घनसदृशकृष्णस्य । धाम्ना त्विषा । श्यामीकृतम् । तत् बृन्दावनम् । तदा तस्मिन् । शरत्प्रसङ्गे शरत्प्रादुर्भावेऽपि । बद्धमयूरलास्यं संजातमयूरनृत्तम् । आसीत् । पिञ्छमालालंकृते भगवति सेन्द्रचापमेघभ्रान्त्येति भावः । तेन व्यज्यमानो **भ्रान्तिमदलङ्कारः** । उपमालङ्कारस्तु वाच्यः ॥ ५८ ॥

**समग्रबन्धूकरजःसमेतं**
**स्मेरातसीमेचकमन्तरिक्षम् ।**

पीताम्बरेण प्रभुणा तदानी-
मयत्नसंभूतमवाप साम्यम् ॥ ५९ ॥

**समग्रेति** । तदानीम् । समग्रैर्बहुलैः बन्धूकरजोभिर्बन्धुजीवपुष्पपरागैः समेतं सहितम् । सेरातसीमेचक विकस्वरक्षुमाकुसुमनीलम् । 'अतसी स्यादुमा क्षुमा' इत्यमरः । अन्तरिक्षम् । पीतमम्बरं यस्य तेन । प्रभुणा कृष्णेन । अयत्नसंभूतं तत्सारूप्यार्थतपोयत्नं विनैव सपन्नम् । साम्यम् । अवाप । **उपमालङ्कारः** ॥ ५९ ॥

समग्रसप्तच्छदरेणुकीर्णैः
स्रोतोभिरुन्नीतमदप्रवाहः ।
स्वकानने स्वैरजुषां गजानां
गोवर्धनो यूथपतिर्बभूव ॥ ६० ॥

**समग्रेति** । समग्रैः सप्तच्छदरेणुभिः सप्तच्छदाख्यतरुविशेषपुष्पधूलिभिः कीर्णैः । स्रोतोभिः निर्झरैः । उन्नीतमदप्रवाहः । सप्तच्छदपरागाणां मदजलसगन्धत्वात्तत्संपर्काद्दिनसौरभैर्निर्झरैर्मदप्रवाहैरिव शोभमान इत्यर्थः । इत्थंभूतो गोवर्धनगिरिः । स्वकानने । स्वैरजुषां स्वाच्छन्द्यं भजताम् । गजानाम् । यूथपतिः प्रधानगजो बभूव । अत्र उन्नीतमदप्रवाह इत्युत्प्रेक्षानुप्राणितो गोवर्धने यूथपतित्वारोपरूपो **रूपकालङ्कारः** ॥ ६० ॥

अधोमुखैश्च प्रतिबिम्बरूपै-
रभ्युन्नतैरात्मभिरप्यशंसन् ।
त्रिविक्रमस्य स्थितमुन्नतं च
पदद्वयं पाथसि रक्तपद्माः ॥ ६१ ॥

दर्पस्य देहा इव योगसिद्धा
दन्तावलानन्तरयांबभूवुः ॥ ६३ ॥

**मदेति** । मदेन प्रभूतध्वनयः । रोधसां नद्यादिकूलानां विभेदने उल्बणानि तीव्राणि तुङ्गानि शृङ्गाणि येषां ते । दर्पस्य स्वतोऽमूर्तस्य । योगसिद्धाः योगप्रभावप्राप्ताः । देहा इव स्थिताः । महोक्षाः महावृषभाः । दन्तावलान् दन्तिनः । अन्तरयांबभूवुः युद्धे तिरश्चक्रुरित्यर्थः ॥ ६३ ॥

सरोरुहां रक्तसितासितानां
श्रिया बभौ शारदवासरश्रीः ।
विहारभाजा गुणभेदयोगा-
द्व्यक्तीकृता विश्वसृजेव माया ॥ ६४ ॥

**सरोरुहामिति** । शारदस्य शरत्संबन्धिनो वासरस्य श्रीः शोभा । रक्तसितासितानां सरोरुहां कोकनदकुमुदेन्दीवराणाम् । श्रिया समृद्ध्या हेतुना। विहारभाजा जगत्सृष्टिलक्षणां क्रीडां भजता । विश्वसृजा भगवता । व्यक्तीकृता सर्गादावुन्मेषं प्रापिता । माया । गुणभेदयोगात् रजःसत्त्वतमसां लोहितशुक्लकृष्णानां गुणविशेषाणां योगादिव । बभौ ॥ ६४ ॥

आरक्तकल्हारविलोचनश्रीः
क्रान्ता भृशं खेलगतिः स्खलन्ती ।
उन्नालनालीकमधुपभोगा-
न्मत्तेव मार्ताण्डसुता बभासे ॥ ६५ ॥

**आरक्तेति** । आरक्ता आसमन्ताद्रक्ता कल्हारविलोचनस्य विलोच-

नतुल्यकल्हारस्य श्रीर्यस्याः सा । क्लान्ता ग्लाना जलसंकोचात्कृशा । भृशम् । खेलगतिः खेला सविलासा गतिर्यस्यास्तथाभूता । स्खलन्ती पाषाणादिप्रदेशेषु लुठन्ती । मार्ताण्डसुता यमुना । उन्नालानां जलह्रासादुद्गतनालानामत एव भारातिशयादवनतानां नालीकानां पद्मानां मधुनो मकरन्दस्यैव मद्यस्य उपभोगान्निषेवणात् । मत्तेव । बभासे । मधुमदमत्तानां लोचनरागादयो भवन्तीति भाव. । ' मद्ये पुष्परसे मधु ' इति विश्वः ॥

वलग्नलग्नोर्मिवलीविभङ्गां
काले यथास्थानगृहीतकार्श्याम् ।
अरंस्त पश्यन्ननघोऽनुरूपां
श्यामां सुदृष्टामपि सूर्यकन्याम् ॥ ६६ ॥

**वलग्नेति** । अनघः अपहतपाप्मा कृष्णः । वलग्ने मध्ये लग्ना ऊर्मय एव वलीविभङ्गा उदररेखाविभागा यस्यास्ताम् । काले शरदि । यथास्थानगृहीतकार्श्यां वर्षासमयात्प्राचीनस्य स्वाभाविकनिजप्रवाहस्थानस्यानतिक्रमणेनाङ्गीकृतकृशभावाम् । स्त्रीपक्षे यौवनकाले कार्श्योचितमध्यस्थानानतिक्रमणेन गृहीतकार्श्याम् । अनुरूपां निजविहारोचिताम् । श्यामां नीलवर्णाम् । यौवनमध्यगतामित्यपि गम्यते । सूर्यकन्यां यमुनाम् । सुदृष्टां सम्यग्बहुशो दृष्टामपि । आदरातिशयात् पश्यन् सन् । अरंस्त रमते स्म ॥ ६६ ॥

शोणाकृतिं कोकनदैरुदारै-
रिन्दीवरैराकलितात्मकान्तिम् ।

सिताम्बुजैः सूचितजाह्नवीता-
मेकामनेकामिव तामभुङ्क्त ॥ ६७ ॥

**शोणेति** । उदारैः महद्भिः । कोकनदैः अरुणाम्बुजैः । शोणाकृतिं अरुणाकाराम् । शोणाख्यनदाकारामित्यपि गम्यते । इन्दीवरैः । आकलितात्मकान्तिं प्राप्तस्वकान्तिम् । सिताम्बुजैः । सूचितजाह्नवीतां सूचितगङ्गाभावाम् । तां यमुनाम् । एकामपि, अनेकामिव शोणायमुनाजाह्नवीरूपेण बह्वीमिव । अभुङ्क्त । एकस्यामपि यमुनायां सिताम्बुजादिसच्छन्नान्प्रदेशान्पश्यन्गङ्गाद्यनेकपरिचयसौख्यं जगामेत्यर्थः ॥ ६७ ॥

कुमुद्वतीं प्रेक्ष्य कलिन्दकन्यां
तारापरिष्कारवतीं त्रियामाम् ।
नभःस्थलीं च स्फुटहंसमालां
नाथस्त्रिधाभूतममन्यतैकम् ॥ ६८ ॥

**कुमुद्वतीमिति** । नाथः कृष्णः । कुमुद्वतीं कुमुदयुक्ताम् । 'कुमुदनडवेतसेभ्यो ड्मतुप्' इति मत्वर्थीयो ड्मतुप्प्रत्ययः । कलिन्दकन्यां यमुनाम् । ताराभिः परिष्कारवतीं अलंकारवतीम् । त्रियामां रात्रिम् । स्फुटहंसमालां प्रव्यक्तहंसपङ्क्तिम् । नभःस्थलीं च । प्रेक्ष्य । एकं वस्तु । त्रिधाभूतं त्रिप्रकारं जातम् । अमन्यत । स्वतः अतिनैल्येन धवलतरकुमुदादिचित्रितत्वेन च यमुनादीनामत्यन्तसादृश्यादिति भावः ॥ ६८ ॥

बन्धूकजालैः परिधानशोभा-
मिन्दीवरैरप्रतिमामभिख्याम् ।

मुखश्रियं तामरसैर्मुरारेः
संभृत्य लेभे शरदानुरूप्यम् ॥ ६९ ॥

बन्धूकजालैरिति । शरत् कर्त्री । बन्धूकजालैः बन्धुजीवपुष्पसमूहैः । मुरारेः भगवतः । परिधानशोभां पीताम्बरशोभाम् । इन्दीवरैः नीलोत्पलैः । अप्रतिमां निःसमाम् । अभिख्यां तन्मूर्तिशोभाम् । एकत्र श्लोके कथितपदस्य पुनःप्रयोगे दुष्टतया पर्यायान्तरप्रयोगः । तामरसैः पद्मैः । मुखश्रियं मुखशोभां च । संभृत्य संपाद्य । आनुरूप्यम् । लेभे लब्धवती ॥ ६९ ॥

पयोधराणां पलितंकरण्या
दिवश्च तारुण्यमिवार्पयन्त्या ।
विचित्रभूम्ना शरदा स्वशक्तिं
विख्यापयामास विहारगोपः ॥ ७० ॥

पयोधराणामिति । विहारगोपः कृष्णः । पयोधराणां मेघानां । कर्मणि षष्ठी । पलितंकरण्या अपलिताः पलिताः क्रियन्तेऽनयेति पलितंकरणी तया । 'आढ्यसुभग' इत्यादिना ख्युन् । 'अरुर्द्विषत्' इत्यादिना मुम् । धवलतां कुर्वन्त्येति यावत् । दिवः आकाशस्य । तारुण्यमिव नैर्मल्यम् । अर्पयन्त्या च । अत एव विचित्रभूम्ना भावानां क्षणादन्यथाभावनसामर्थ्यदर्शनेन अचिन्त्यमहिम्ना । शरदा । स्वशक्तिं स्वकीयां जगति कर्तुमकर्तुमन्यथा च कर्तुं शक्तिम् । विख्यापयामास प्रथयति स्म ॥

कुमुद्वतीकल्पितभृङ्गगीतः
संदर्शयन्दर्पणमिन्दुबिम्बम् ।

**सचामरश्चन्द्रिकया सिषेवे**
**तमीश्वरं तत्र शरत्प्रदोषः ॥ ७१ ॥**

**कुमुद्वतीति** । तत्र बृन्दावने । कुमुद्वतीषु कुमुदश्रेणिषु कल्पिता भृङ्गगीतिर्भ्रमरगीतिर्येन स । तथा इन्दुबिम्बमेव दर्पण आदर्शम् । सदर्शयन् । चन्द्रिकया ज्योत्स्नया । सचामर चामरसहित. । शरत्प्रदोष. । ईश्वर स्वामिनम् । तम् । सिषेवे । यथा राजान सेवाकुशला गानदर्पणाद्युपहारेण प्रीणयन्त सेवन्ते, एव शरत्प्रदोषोऽपि भगवन्त सिषेवे इत्यर्थ ॥

**सरोरुहां रक्तसितासितानां**
**स्थानेषु भृङ्गध्वनिभिः प्रतेने ।**
**जिगीषतः पञ्चशरस्य विश्वं**
**तूर्णं प्रवृत्तैरिव तूर्यघोषैः ॥ ७२ ॥**

**सरोरुहामिति** । रक्तासितासिताना सरोरुहाम् अरविन्दकुमुदेन्दीवराणाम् । स्थानेषु । भृङ्गध्वनिभि कर्तृभि । विश्व । जिगीषत· जेतुमिच्छत. । पञ्चशरस्य । तूर्ण प्रवृत्तै झटिति युगपत्समुत्थितै. । तूर्यघोषै वाद्यध्वनिभिरिव । प्रतेने प्रतायते स्म । प्रपञ्चेन प्रवृत्तमित्यर्थ । तनोते कर्मकर्तरि भावे लिट् । कर्मकर्तरि 'कर्मवत्कर्मणा तुल्यक्रिय' इति वत्करणादतिदेशत· कर्मकार्यभाक्त्वेऽपि स्वाश्रयाकर्मकत्वनिबन्धनो भावे लकारोऽप्यस्तीत्याहु ॥ ७२ ॥

**निर्मुक्तभोगीन्द्रनिभैः पयोदै-**
**र्नभःस्थली व्याप्ततनुर्बभासे ।**

अनङ्गयोग्यैर्हरिनीलभूमि-
धौतप्रकीर्णैरिव चामरौघैः ॥ ७३ ॥

**निर्मुक्तेति** । निर्मुक्तभोगीन्द्रनिभैः मुक्तकञ्चुकसर्पराजतुल्यैः, तथा धवलैः । पयोदैः । व्याप्ततनुः । नभःस्थली । अनङ्गयोग्यैः मन्मथोचितैः । धौतप्रकीर्णैः क्षालितैस्ततो विस्तारितैश्च । चामरौघैः । व्याप्ततनुः इत्यनुषङ्गेण सबध्यते । हरिनीलभूमिः इन्द्रनीलस्थलीव । चकाशे ॥ ७३ ॥

विभाव्य बन्धूकविभातसंध्यां
कालोचितं कल्पयितुं विहारम् ।
द्विजैरुपाधावि निसर्गशुद्धै-
रङ्गीकृतानाविलतीर्थतोयैः ॥ ७४ ॥

**विभाव्येति** । निसर्गशुद्धैः स्वतःसितैः । द्विजैः हंसैः । स्वतः पवित्रैर्ब्राह्मणैरित्यपि गम्यते । बन्धूकानि बन्धुजीवपुष्पाण्येव विभातसंध्याम्, आताम्रत्वादिति भावः । तां विभाव्य दृष्ट्वा । कालोचितं विहारं बन्धूकसमृद्ध्यवगतशरत्कालोचितां सरसीषु क्रीडाम् । विहरणकालोचितमग्निविहरणं च । कल्पयितुं कर्तुम् । अङ्गीकृतानाविलतीर्थतोयैः एकत्र क्रीडार्थमन्यत्र स्नानार्थं चिन्तितानिर्मलतीर्थतोयैः सद्भिः । उपाधावि उपधावितम् ॥ ७४ ॥

अनिन्दितां ग्लानिमिवोद्वहन्त्यो
वितेनिरे मन्दतरान्प्रचारान् ।
वर्षानिशीथे दयितेन मुक्ताः
श्रान्तिं प्रयाता इव शैवलिन्यः ॥ ७५ ॥

**अनिन्दितामिति**। अनिन्दितां मनोहराम्। ग्लानिमिव उद्वहन्त्यः कार्श्यं बिभ्रत्यः। इवशब्दो वाक्यालङ्कारे। शैवलिन्यः नद्यः। **वर्षास्वेव निशीथे** रात्रौ। 'निशीथस्त्वर्धरात्रे स्यान्निशीथो रात्रिमात्रके' इति विश्वः। दयितेन समुद्रेण। भुक्ताः सत्यः। श्रान्तिं प्रयाता इव। मन्दतरान् अतिशयेन मन्दान्। प्रचारान्। वितेनिरे चक्रुः। अत्र समुद्रकर्तृकभोगारूपतया वर्षासु नदीसमुद्रसङ्गममध्यवसाय्य तद्धेतुश्रमभजनं मन्दप्रचारे हेतुत्वेनोत्प्रेक्ष्यते इति **हेतूत्प्रेक्षा**, समुद्रकर्तृकभोगासंबन्धेऽपि तत्संबन्धोक्त्या **अतिशयोक्तिः**, विशेषणस्य हेतुगर्भत्वात्**काव्यलिङ्गं** चेति संकरः॥ ७५॥

**श्रिया समं भावितपद्मभूम्ना**
**घनागमादुल्लसितः पयोधेः।**
**रराज नीले रविरन्तरिक्षे**
**मणीश्वरो माधववक्षसीव॥ ७६॥**

**श्रियेति**। भावित उत्पादितः पद्मानां भूमा विकासरूपो यया तया। श्रिया समं शोभया सह। कौस्तुभपक्षे स्वयमुरवेशेन धारणेन च उत्पादितपद्मभूम्ना श्रिया लोकमात्रा सह। घनागमात् वर्षासमयात् पयोधेरिति व्यस्तरूपकम्। उल्लसितः उदितः। रविः आदित्यः। नीले। अन्तरिक्षे। माधवस्य वक्षसि उरसि। मणीश्वरः कौस्तुभ इव। रराज। अत्र भावितपद्मभूम्नेत्यादि श्लेषमूलकातिशयोक्त्या रूपकेण चानुप्राणित **उपमालङ्कारः**॥ ७६॥

**अवाप्य संकोचमतीव भूयः**
**कालागमादुन्मिषतो नभस्तः।**

विभागमापुर्विदिशो दिशश्च
प्रजाः प्रसन्नादिव विश्वधाम्नः ॥ ७७ ॥

**अवाप्येति**। अतीव अत्यर्थम्। 'बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे' इत्यमरः। संकोचम् अवाप्य मेघान्धकारिततया सकुचिताकारत्वमवाप्य। भूयः पुनरपि। कालागमात्। शरत्कालोपगमात्। उन्मिषतः मेघापायेन विमलीभवतः। नभस्तः आकाशात्। दिशः विदिशश्च महादिशश्च अवान्तरदिशश्च। विभागम् आपुः प्राच्यादिविभागं प्रापुः। मेघान्धकारिते गगने अविज्ञेयप्राच्यादिविभागा दिशस्तद्वैमल्ये सति विभागेनावगता इत्येतावता ततो विभागमापुरित्युक्तिः। प्रलयसमये योगनिद्रासंकोचमवाप्य पुनः सर्गकालागमादुन्मिषतः प्रबुध्यमानादत एव प्रसन्नाद्विश्वधाम्नो जगन्निवासात् परमपुरुषात् प्रजा इव। यथा प्रलयोपसंहृता देवमनुष्यादिविभागरहिताः प्रजाः पुनः सर्गादौ भगवता सृज्यमानास्ततो विभागमाप्नुवन्ति तद्वदिति भावः॥ ७७ ॥

समुद्यतस्तिग्मरुचो घनाब्धे-
रुन्निद्रतां पूर्वमुपाजगाम।
रथाङ्गपाणेरिव सिन्धुजन्मा
सरोजिनी चारुसरोजलक्ष्या ॥ ७८ ॥

**समुद्यत इति**। घनाब्धेः मेघसमुद्रात्। समुद्यतः आविर्भवतः। तिग्मरुचः उष्णकरात्। पूर्वमेव। चारुसरोजलक्ष्या चारुभिः सरोजैर्दृश्या। सरोजिनी। समुद्राद्योगशयनादुत्तिष्ठतः। रथाङ्गपाणेः भगवतः। पूर्वमेव। चारुसरोजलक्ष्या पद्महस्ता। सिन्धुजन्मा लक्ष्मीरिव। उन्निद्रतां उन्मे-

षम् । उपाजगाम । यथा पत्युः पूर्वमेव पतिव्रता लक्ष्मीरुन्निद्रा भवति, एव शरदारम्भेऽप्यनुवर्तमानान्मेघजलनिधेरुद्गच्छतो दिनकरात्पूर्वमेव शरत्कालवशात्पद्मिनी विकासमापेत्यर्थः ॥ ७८ ॥

**उत्सारयञ्जीर्णसिलिन्ध्रजालं**
**प्रायो मदैः पेचकिनां प्रसिञ्चन् ।**
**चकार सप्तच्छदरेणुजालैः**
**कालो महीं कामविहारयोग्याम् ॥ ७९ ॥**

**उत्सारयन्निति** । जीर्णसिलिन्ध्रजाल वर्षासमयोत्पन्नजरत्कदलिपुष्पजालम् । उत्सारयन् अपसारयन् । 'कदल्या तु सिलिन्ध्र स्यात्' इति शब्दार्णव । पेचक करिपुच्छमूलोपान्तप्रदेश । 'उलूके करिण पुच्छमूलोपान्ते च पेचक' इत्यमर । स एषामस्तीति पेचकिनो गजा तेषाम् । मदै मदजलै । प्राय बाहुल्येन । 'प्रायो भूम्न्यन्तगमने' इत्यमर. । प्रसिञ्चन् प्रकर्षेण सिञ्चन् । काल शरत्काल । सप्तच्छदरेणुजालै सप्तपर्णकुसुमपरागनिवहैरितस्ततो विकीर्यमाणै । महीम् । कामस्य विहारे लीलासञ्चारे योग्या चकार । यथा राज्ञा सञ्चारभूमिं तृणादिकमपसार्य जलैरासिच्य पुष्पादिविक्षेपेण विहारयोग्या कुर्वन्ति तद्वदिति भाव ॥ ७९ ॥

**कृतोदयाः कृष्णवलाहकेन**
**स्रोतोवहाः स्वैरविहारभाजः ।**
**त्रपामिव स्थानगतिप्रतीक्ष्याः**
**स्वाभाविकीं स्वच्छदशामवापुः ॥ ८० ॥**

**कृतोदया इति** । कृष्णवलाहकेन कालमेघेन । कृतोदयाः कृतजलसमृद्धयः । अत एव, स्वैरविहारभाजः उत्कूलप्रवाहादिस्वच्छन्दविहारभाजः । स्रोतोवहाः नद्यः । स्थानगतिप्रतीक्ष्याः शरत्समये जलसंकोचाद्यथापूर्वं स्वस्थानगत्या प्रतीक्ष्याः पूज्या रमणीयाः सत्यः । स्वाभाविकीं स्वभावसिद्धाम् । स्वच्छदशां निर्मलावस्थाम् । त्रपां लज्जामिव । अवापुः । यथा केनचिद्वनितावशीकरणविदग्धेन परपुरुषेण कृतविक्रिया अतएवाभिसरणप्रवृत्ता अभिसारिका इव स्वच्छन्दविहारभाजः कुलाङ्गनाः स्थानप्राप्तौ भ्रात्रादीनां पूज्याः सत्यः तत्पूजया स्वगौरवमालोच्य गौरवभञ्जकमनुचितं कृतमिति त्रपामवाप्नुवन्ति तद्वदिति भावः ॥ ८० ॥

**सुखावगाह्यैः सुदृशामतुष्य-**
**त्स्वादोत्तरैः शौरिरपेतपङ्कैः ।**
**प्रसन्नशीतैरनघैः पयोभिः**
**स्वभक्तचित्तैरिव यामुनीयैः ॥ ८१ ॥**

**सुखावगाह्यैरिति** । शौरिः कृष्णः । सुदृशां सुलोचनानां स्त्रीणाम् । सुखावगाह्यैः वर्षासमयवदगाधत्वाभावात्सुखेनावगाढुं शक्यैः । भक्तचित्तपक्षे सुदृशां सुबुद्धीनामदुष्टचित्तानां सुखप्रवेशैः । भक्तचित्तानि सात्त्विकैरेव परिचयं सहन्ते नान्यैरिति भावः । स्वादोत्तरैः माधुर्येणाधिकैः । पक्षे ब्रह्मानन्दास्वादेनाधिकैः । अपेतपङ्कैः अपगतकर्दमैः । पक्षे अपगतपापैः । 'पङ्कोऽस्त्री कर्दमैनसोः' इति वैजयन्ती । प्रसन्नशीतैः प्रसन्नानि अनाविलानि शीतानि चेति विशेषणद्वयसमासः । पक्षे प्रसादो रागद्वेषाद्यभावनाविलत्वं शैत्यं दयालुत्वम् । अनघैः रम्यैः । यामुनीयैः यमुनाया अयं

प्रवाहो यामुनः तत्र भवैः। पक्षे यामुनाचार्ये विष्णुभक्तप्रवरे भवैः। तदासक्तैरिति यावत्। उभयत्रापि 'वृद्धाच्छः' पयोभिः जलैः। स्वभक्तचित्तैरिव। अतुष्यत् अहृष्यत्॥ ८१॥

अनुल्बणैरन्वहमूर्मिभेदैः
संपन्नरेखाः सरितामधोऽधः।
श्रियो दधुः पद्मवनावतारे
सोपानतां सैकतसंनिवेशाः॥ ८२॥

**अनुल्बणैरिति**। अनुल्बणैः जलह्रासादनुद्धतैः। ऊर्मिभेदैः उत्तरोत्तरं ह्रस्वैस्तरङ्गविशेषैः। अन्वहं प्रत्यहम्। अधोऽधः पूर्वपूर्वरेखाया अधस्तात्समीपे। 'उपर्यध्यधसः सामीप्ये' इति द्विर्भावः। सरिताम्। संपन्नरेखाःसञ्जातरेखाः। सैकतानां सनिवेशाः स्थानानि। श्रियः लक्ष्म्याः। पद्मवनावतारे सोपानताम्। दधुः धारयामासुः। अत्र सैकतेषु सोपानत्वारोपस्यावतरणरूपप्रस्तुतकार्योपयोगात्**परिणामालंकारः**॥ ८२॥

प्रसादभाजा समयेन दत्ता-
स्त्रैलोक्यलक्ष्म्यास्तरलस्वभावाः।
पयोधरस्थानगता विरेजु-
र्हाराः प्रभूता इव हंसमालाः॥ ८३॥

**प्रसादेति**। तरलस्वभावाः चञ्चलस्वभावाः भास्वररूपाश्च। 'तरलो भास्वरे हारे चञ्चलेऽपि' इति वैजयन्ती। पयोधरस्थानगताः मेघस्थानगताः; स्तनस्थानगताश्च। हंसमालाः मरालपङ्क्तयः। प्रसादभाजा सम-

येन नैर्मल्यभाजा शरत्कालेन, प्रसन्नेन केनचिन्नायकेन, च । दत्ताः । प्रभूता. बहव । त्रैलोक्यलक्ष्म्या त्रैलोक्यश्रिय । हारा इव रेजु । **स्वरूपोत्प्रेक्षालंकारः** ॥ ८३ ॥

**जलातपत्यागसमागमाभ्यां**
**प्राचीमवक्रां प्रकृतिं भजन्त्यः ।**
**तदन्वयत्यागवशादवाप्तैः**
**पङ्कैरमुच्यन्त शनैः पदव्यः ॥ ८४ ॥**

**जलातपेति** । जलातपयो त्यागसमागमाभ्या जलत्यागेनातपसमागमेन च । प्राची प्राक्तनीम् । अवक्राम् ऋज्वीम् । प्रकृतिं स्वभावम् । भजन्त्य । पदव्य मार्गा । तदन्वयत्यागवशात् तयोर्जलातपयोरन्वयत्यागायत्ततया, वर्षासु जलान्वयेनातपत्यागेन च अवाप्तै प्राप्तैः । पङ्कै । अमुच्यन्त । यथा ऋजुप्रकृतयो जडजनसङ्गेन सत्सङ्गत्यागेन च कृतैनसः पुनर्जडजनसङ्गत्यागेन सत्सङ्गेन च प्राची प्रकृतिं प्राप्तास्तैरेनोभिर्मुच्यन्ते, तद्वदिति भाव ॥ ८४ ॥

**स्थाने विनिद्राः स्थलपद्मकोशाः**
**प्रायो गतिं पान्थजनस्य रोद्धुम् ।**
**अरुंतुदानामुमुचुः परागा-**
**नाश्यानपङ्केषु महापथेषु ॥ ८५ ॥**

**स्थान इति** । स्थाने विनिद्रा विकसिता. । स्थलपद्मकोशा. स्थलकमलमुकुला । प्राय. नूनम् । पान्थजनस्य विरहिण पथिकस्य । गतिं गमन रोद्धुम् । आश्यानपङ्केषु ईषच्छुष्ककर्दमेषु । महापथेषु महामार्गेषु ।

अरुंतुदान् मर्मवेधिन । 'अरुंतुदस्तु मर्मस्पृक्' इत्यमर । परागान् पुष्परजांसि । आमुमुचु. चिक्षिपुरित्यर्थ ॥ ८५ ॥

पतत्रलीलाहतपुष्करान्तैः
पद्मालयानूपुरसौम्यनादैः ।
शुभैरभावि स्वपतस्त्रिधाम्नः
प्रत्यूषतूर्यैरिव राजहंसैः ॥ ८६ ॥

**पतत्रेति** । पतत्रलीलया पक्षक्रीडया आहतपुष्करान्तैः अभिहतपद्मप्रान्तैः । 'लीला क्रीडा विहारश्च' इति वैजयन्ती । पद्मालयानूपुरसौम्यनादैः लक्ष्म्या मञ्जीरवन्मनोहरनिनदैः, पद्मवने सचरन्त्या लक्ष्म्या मञ्जीरनादैरिव स्थितैरित्यर्थ । 'सौम्यो विप्रे सोमजेऽब्दे सुन्दरे सोमदैवते' इति वैजयन्ती । राजहंसैः हंसविशेषैः । 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः' इत्यमर । स्वपत । त्रिधाम्न विष्णोः, अब्धिशायिन. शरदि प्रबुध्यमानस्येति भाव । 'त्रिधामा केशवेऽनले' इति वैजयन्ती । शुभैः मङ्गलैः प्रत्यूषतूर्यैः प्रभातवाद्यैरिव । अभावि भूयते स्म । वाद्यपक्षे पतत्रलीलाहतपुष्करान्तैरित्यत्र वाद्यभाण्डमुखाहननप्रतीतिरनुसर्तव्या । 'पुष्कर करिहस्ताग्रे वाद्यभाण्डमुखे जले' इत्यमर. ॥ ८६ ॥

कल्हारनिष्पादितकर्णपूरा
वितीर्णबन्धूकविशेषकश्रीः ।
आमुक्तपद्मोत्पलरेणुरासी-
त्सैरन्ध्रिका कापि शरत्त्रिधाम्नः ॥ ८७ ॥

**कल्हारेति** । कल्हारेण सौगन्धिकेन निष्पादितः कर्णपूरो यया ।

वितीर्णा दत्ता बन्धूकविशेषकस्य बन्धुजीवकुसुमदलरूपस्य तिलकस्य श्री शोभा यया । 'तमालपत्रतिलकचित्रकाणि विशेषकम्' इत्यमरः । आ-मुक्ताः पद्मोत्पलानां रेणवः परागा यया । सा शरत् । त्रिधाम्नः कृष्णस्य । कापि सैरन्ध्रिका काचित्प्रसाधिका । आसीत् ॥ ८७ ॥

**सरोजकोशान्मिषतः प्रभुग्ना-**
**ञ्शालीन्विपाकानतपिञ्जराग्रान् ।**
**शुकांश्च तेष्वापततोऽनुमेने**
**शौरिः सयूथ्यानिव शोणतुण्डान् ॥ ८८ ॥**

**सरोजेति** । शौरिः कृष्णः । मिषतः विकसतः । प्रभुग्नान् उन्नालत्वादवनतान् । सरोजकोशान् कमलमुकुलान् । विपाकेन परिणामेन आनतः पिञ्जरः पीतरक्तः अग्रं येषाम् । 'पिञ्जरः पीतरक्तः स्यात्' इति हलायुधः । तान् शालीन्, कलमान् । तेषु शालिषु । भक्षणाय, आपततः । शोणतुण्डान् अरुणवक्त्रान् । शुकांश्च । सयूथ्यान् समानयूथे भवानिव एकजातीयानिव । अनुमेने अरुणावनतशिरस्कत्वेनातिसादृश्यादिति भावः ॥ ८८ ॥

**स्ववेगसंछन्नगभीरभावं**
**स्रोतस्विनीनामपहाय तोयम् ।**
**कालुष्यमायोधनकालयोगा-**
**द्वीराङ्गनानां हृदयं विवेश ॥ ८९ ॥**

**स्ववेगेति** । कालुष्यं आविलत्वं कर्तृ । स्ववेगसंछन्नगभीरभावं स्वस्य कालुष्यस्य वेगेन अतिशयेन संछन्नः तिरस्कृतः गभीरभावः निम्नता

मस्य तथोक्तम्, सरिज्जलानां निम्नता स्वच्छदशायामेव भाव्यते न कालु-ष्यदशायामिति भावः। स्रोतस्विनीनां सरिताम्। तोयमपहाय। आयो-धनकालयोगात् शरद्रूपस्य युद्धकालस्य समागमात्। वीराङ्गनानां वीरप-त्नीनाम् हृदयम्। विवेश प्रविष्टम्। शरदि नदीजल वर्षास्वाविलीभूत-मनाविलमभूत्। वीरपत्नीनां हृदय तु पतीनां युद्धप्रस्थानशङ्कया आवि-लमभूदित्यर्थः। स्ववेगसछन्नगभीरभावमिति हृदयेऽपि योज्यम्। मरण-शङ्काकालुष्यवेगेन गभीराणामपि हृदयाना स्फुटकातरत्वापादनात् ॥ ८९ ॥

नवप्ररूढैर्नलिनीपलाशैः
शाराणि वेशन्तजलान्यवापुः।
स्फुरत्कलङ्कस्य तुषारधाम्न-
श्छायाभिरन्याभिरिवाविशेषम् ॥ ९० ॥

**नवेति**। नव यथा तथा प्ररूढै अङ्कुरितैः। नलिनीपलाशै पद्मिनीप-त्रैः। शाराणि चित्राणि। वेशन्तानां क्षुद्रसरसां जलानि। स्फुरत्कलङ्क-स्य। तुषारधाम्नः शीतरुचेः। अन्याभि. बिम्बग्राहिदर्पणाद्युपाधिनिरपेक्ष-तया प्रसिद्धविसदृशीभि.। 'अन्यौ विभिन्नसदृशौ' इति यादव.। छाया-भि प्रतिबिम्बैः। अविशेषम् अभेदम्। अवापुरिव तादृशप्रतिबिम्बवद-बभासन्त इत्यर्थ। अत एवोत्प्रेक्षालङ्कारः ॥ ९० ॥

वर्षीयसीनामपि पद्मिनीनां
सौम्येन वर्षान्तरसायनेन।
सामोदमन्दस्मितहार्यभृङ्गं
युक्तं श्रिया यौवनमाविरासीत् ॥ ९१ ॥

**वर्षीयसीनामिति** । वर्षीयसीनां अतिवृद्धानामपि । पद्मिनीनां नलिनीनामेव स्त्रीजातिविशेषाणाम् । सौम्येन मनोज्ञेन । रसायनपक्षे अनुग्रेण । प्रायो रसायनानि पारदगन्धकादियोगादुग्राणि भवन्ति, अतथाभूतेन । 'सौम्यो बुधे मनोज्ञे स्यादनुग्रे सोमदैवते' इति विश्वः । वर्षान्तं शरदेव रसायनं जराव्याधिहरमौषधं तेन । 'रसायनं विहङ्गेऽपि जराव्याधिहरौषधे' इति विश्वः । सामोदेन ससौरभेण मन्दस्मितेन दरविकासेन हार्या हर्तुं शक्या भृङ्गा अलिनो येन तत्तथोक्तम् । पक्षे सानन्दमन्दहासेन हार्या भृङ्गाः षिड्गा येन । 'भृङ्गो मधुपषिङ्गयोः' इति रत्नमाला । श्रिया महालक्ष्म्या, पक्षे शोभया । युक्तम् । यौवनम् । आविरासीत् । जीर्णानामपि कमलाकराणां शरत्कालवशात्पुनः पत्रपुष्पादिप्ररोहेण तारुण्यमभूदित्यर्थः । श्लिष्टाश्लिष्टशब्दनिबन्धनो **रूपकालंकारः** ॥

**शरद्विभूतिं कुमुदावदातां**
**संवीतनीलाम्बरदर्शनीयाम् ।**
**अमंस्त निर्धूतघनप्रलम्बां**
**मूर्तिं बलस्येव शुभां मुकुन्दः ॥ ९२ ॥**

**शरदिति** । मुकुन्दः । कुमुदैः अवदातां सिताम् । पक्षे कुमुदमिवावदाताम् । सवीतेन समन्तात् विभिः पक्षिभिः वर्षात्ययान्नीडनिर्गतैः इतेन प्राप्तेन नीलेन मेघापायात्प्रकाशस्वनैल्येन अम्बरेणाकाशेन दर्शनीया रम्याम् पक्षे सवीतेन वेष्टितेन असितांशुकेन दर्शनीयाम् । निर्धूतघनप्रलम्बा निरस्तमेघलम्बनाम् । पक्षे निरस्तकठिनप्रलम्बासुराम् । 'कठिनाधिकसान्द्रेषु वाद्यमध्यमनृत्तयोः । मुस्तामुद्गरमेघेषु त्रिषु क्लीबे पुमान्घनः' इति रत्नमाला । शुभा मनोज्ञाम् । शरद्विभूतिं शरत्सम्पदम् । बलस्य बलदेवस्य । मूर्तिमिव । अमंस्त । **उपमालंकारः** ॥ ९२ ॥

**निद्रायितेव प्रथमं पयोदैः**
**प्रशान्तनिद्रेव शरत्प्रसादात् ।**
**जगत्त्रयी तद्व्रतिनीव भेजे**
**जातोद्यमं जागरणे मुकुन्दम् ॥ ९३ ॥**

**निद्रायितेति ।** प्रथम वर्षासमये । पयोदै हेतुभि । निद्रायितेव निद्रावती जातेव स्थिता । तत , शरद प्रसादात् नैर्मल्यात् । प्रशान्तनिद्रेव स्थिता । जगत्त्रयी । जागरणे जातोद्यम मुकुन्दम् । तद्व्रतिनीव तस्य मुकुन्दस्य व्रत नियम तद्वतीव तदनुष्ठितानुष्ठानेन पतिव्रताधर्मेण तदनुवर्तनपरेव । भेजे सेवते स्म । **उत्प्रेक्षालंकारः** ॥ ९३ ॥

**निद्रापदेशेन जगद्विभूति**
**विभावयन्नित्यविधूतनिद्रः ।**
**प्रबुध्यमानः स विभुः प्रजानां**
**प्रादात्स्वधर्मानुगुणं प्रबोधम् ॥ ९४ ॥**

**निद्रेति ।** नित्यविधूतनिद्र. प्रकृत्या नित्यनिरस्तनिद्राजाड्य. । निद्राया अपदेशेन व्याजेन । जगतां विभूति सपदम् । विभावयन् चिन्तयन् । स विभु क्षीरोदशायी । प्रबुध्यमान सन् । प्रजाना प्राणिनाम् । सबन्धसामान्यविवक्षया षष्ठी । स्वधर्मानुगुण प्रबोध प्रादात्, स्वय प्रबोधेन प्राणिष्वपि प्रबोधमासञ्जयस्तत्तत्कर्मसापेक्षतया तदनुरूपमेव प्रबोध ददावित्यर्थ । 'त्वयि सुप्ते जगन्नाथ जगत्सुप्त भवेदिदम् । उत्थिते चेष्टते सर्वमुत्तिष्ठोत्तिष्ठ माधव ' इत्यादि वचनमत्र प्रमाणम् ॥ ९४ ॥

अव्यासङ्गं जलधिशयनादुत्थितस्यात्मधाम्नः
पत्युः पुण्यं प्रथमनयनस्पन्दितं प्राप्तुकामा ।
नित्यापूर्वश्रुतिपरिमलं न्यस्तलीलारविन्दा
पादाम्भोजं सह वसुधया धारयामास पद्मा ॥

**अव्यासङ्गमिति** । जलधिशयनात् । उत्थितस्य । आत्मधाम्न आत्मैव धाम स्थान यस्य तस्य, वस्तुत स्वमहिमप्रतिष्ठितस्य । पत्यु नारायणस्य । अव्यासङ्ग प्राग्विषयान्तरस्पर्शाभावेन व्यासङ्गरहितम् । पुण्य श्रेयस्करम् । प्रथमनयनस्पन्दित आद्यदृष्टिपातम् । प्राप्तुकामा । पद्मा लक्ष्मी । न्यस्तलीलारविन्दा सती । वसुधया धरणीदेव्या सह । नित्यापूर्वश्रुतिपरिमल नित्य अपूर्व कमलान्तरेषु सर्वथैव अप्रसिद्ध श्रुतिपरिमल भगवच्चरण सेवमाना श्रुतिरेव परिमल यस्य तत् । पादाम्भोज भगवच्चरणकमलम् । धारयामास कराभ्या धारितवती । अङ्ग स्पृशत्सु प्रबुध्यमानाना प्रथमदृष्टिपातो भवतीति भावः । **मन्दाक्रान्तावृत्तमेतत्** ॥

अनुचरितविधिज्ञैरादृतां पूर्वपूर्वै-
र्महदिदमनपायं मङ्गलं मन्यमानाः ।
प्रचितविविधभोग्यां प्रारभन्त प्रतीतां
वलमथनसपर्यां वल्लवा नन्दमुख्याः ॥ ९६ ॥

**अनुचरितेति** । नन्दमुख्या नन्दप्रभृतय. । वल्लवा गोपा । अनुचरितविधिज्ञै. कुलक्रमानुष्ठितविधानविद्भि । पूर्वपूर्वै· पितृपितामहादिभि । आनुपूर्व्ये द्विर्भावः । आदृताम् आदरेणानुष्ठिताम् । प्रचितविविधभोग्या स्फीतनानाविधभोग्यद्रव्याम् । प्रतीतां प्रख्याताम् । वलमथन-

सपर्याम् इन्द्रपूजाम् । महत् । अनपाय ध्रुवम् । मङ्गल श्रेय. । मन्यमाना· सन्तः । प्रारभन्त । इदशब्दस्य सपर्यापरत्वेऽपि मङ्गलापेक्षया नपुस-कत्वम् ॥ ९६ ॥

वाहेषु गोषु द्विरदेषु चाग्र्यां
तज्जन्यया जीविकयोपपन्नाः ।
तदर्हसंभारवतीं सपर्यां
क्षिप्तापदं क्षेमविदो वितेनुः ॥ ९७ ॥

**वाहेष्विति** । वाहेषु हयेषु । गोषु । द्विरदेषु गजेषु च स्वकीयेषु विषयेषु । तज्जन्यया इन्द्रजन्यया । जीविकया वृष्टिसापेक्षतृणादिलक्षणेन जीवनेन । उपपन्नाः युक्ता । क्षेमविद लब्धसरक्षणाभिज्ञा. नन्दादय । तदर्हसभारवतीं इन्द्रोचितपूजाद्रव्यसमग्राम् । अग्र्या भक्तिश्रद्धादियोगेन श्रेष्ठाम् । क्षिप्तापद पूर्वपूर्ववत्सरेषु निरस्तगोकुलविपदम् । सपर्याम् । वितेनु चक्रुः ॥ ९७ ॥

आबालप्रेक्षणीयं प्रणतमनिमिषैरद्भुतानां प्रधानं
धूतत्रैलोक्यदोषं ध्वजममरपतेस्तूर्णमुत्थापयन्तः ।
घृष्टीनामर्चनाभिः स्तुतिगुणनिकया गीतनृत्तोपहारै-
रुद्वेलप्रीतिलोला विदधुरविकलैरुत्सवं गोपवृद्धाः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु यादवाभ्युदये महाकाव्ये
पञ्चमः सर्गः ।

आबालेति । आबालप्रेक्षणीयं सर्वजनप्रेक्षणार्हम् । अनिमिषैः देवैः गगने संचरद्भिः । प्रणतम् । अद्भुतानां प्रधानम् आश्चर्याणां मुख्यमत्याश्चर्यभूतम् । धूतत्रैलोक्यदोषं विधूतत्रैलोक्यकिल्बिषम् । अमरपतेः ध्वजं इन्द्रध्वजम् । तूर्णमुत्थापयन्तः । उद्वेलया कूलंकषया प्रीत्या लोला इतस्ततः संभ्रमेण संचरन्तः । गोपवृद्धाः । गृष्टीनाम्, गृष्टयः सकृत्प्रसूता गावः । गोमात्रोपलक्षणमेतत् । तासाम् । अर्चनाभिः । स्तुतीनां गुणनिकया आवृत्त्या । अविकलैः समग्रैः । गीतैः नृत्तैः उपहारैः उपायनैश्च । उत्सवं विदधुः । स्रग्धरावृत्तमिदम् ॥ १८ ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजिश्रीरङ्ग-
राजाध्वरिवरसूनुना अप्पय्यदीक्षितेन विरचिते
यादवाभ्युदयव्याख्याने
**पञ्चमः सर्गः ।**

# षष्ठः सर्गः ॥

शमयता पुरुहूतमहोत्सवं
व्रजपतिः सह वल्लवयूथपैः ।
निभृतमञ्जुगिरा निजसूनुना
निजगदे जगदेककुटुम्बिना ॥ १ ॥

**शमयतेति** । व्रजपति गोकुलप्रधानभूतो नन्द । वल्लवयूथपै अपरैरपि गोपप्रमुखै कर्मभि· सह । पुरुहूतमहोत्सव प्रस्तुतम् । शमयता निवारयता । निभृतमञ्जुगिरा निभृता विनीता मञ्जु निसर्गमधुरा च गीर्यस्य तेन । 'निभृतविनीतप्रश्रिता समा·' इत्यमर । जगतामेकेन मुख्येन कुटुम्बिना, सकलजगत्पालनधुरंधरेणेति यावत् । निजसूनुना स्वपुत्रेण कृष्णेन । निजगदे गादित । कर्मणि लिट् । एकपादभागावृत्तियमकमत्र शब्दचित्रम् । द्रुतविलम्बितं वृत्तम् ॥ १ ॥

विदितवानिव विज्ञपयाम्यहं
शृणुत मे शकुनेरिव भाषितम् ।
पृथुकबुद्धिरहं पृथुचेतसः
प्रभवतो भवतो नहि शिक्षये ॥ २ ॥

**विदितवानिति** । अहम् । विदितवानिव प्रबुद्ध इव । बालोऽहं प्रबुद्ध इव, विज्ञपयामि कंचिदर्थं निवेदयामि । शकुने पक्षिण शुकादे-

रिव । मे भाषितम् । असारमपीति भाव । शृणुत आकर्णयत । पृथुकबुद्धिः बालबुद्धि । अहम् । पृथुचेतस महाशयान् । प्रभवत समर्थान् । भवत. युष्मान् । नहि शिक्षये । बालोऽस्माञ्शिक्षयतीति नावमन्तव्यम् । असारमपि मम विज्ञापन शुकभाषितवत्कौतुकमात्रेणादरणीयमित्यर्थ । नहीत्यखण्डमव्यय नञर्थे । 'ज्ञप मिच्च' इति चौरादिकात् ज्ञानज्ञापनोभयवृत्तेर्ज्ञपधातोर्ज्ञापनेऽर्थे विज्ञपयामीति प्रयोग । मित्त्वाद्ध्रस्व ॥ २ ॥

**निगमदृष्टमिदं निखिलेन वः**
**क्वचन विश्वतनौ पुरुषे स्थिते ।**
**य इह यामुपजीवति तत्तनुं**
**स हि तया हितया भुवि नाथवान् ॥ ३ ॥**

**निगमेति** । इद मया वक्ष्यमाणम् । व युष्माकम् । निखिलेन कृत्स्नेन । प्रकारेणेति शेष । निगमेषु पुराणादिषु दृष्टम् । बुद्ध्यर्थत्वाद्वर्तमाने क्तप्रत्यय इति तद्योगात् व इति षष्ठी । किं तत् तत्राह—क्वचन कस्मिंश्चित् अवाङ्मनसगोचरमहिमाकरे । विश्वतनौ सर्वप्रपञ्चशरीरके । पुरुषे स्थिते सति । इह भुवि । य पुमान् । याम् । तस्य पुरुषस्य तनुम् । उपजीवति उपाश्रित्य जीवति । स हि पुमान् । हितया हितहेतुभूतया तत्संपादयित्र्या । तया तन्वा । भुवि नाथवान् सैव तस्योपासनीया देवतेत्यर्थ । भगवत एव सर्वशेषित्वात्कथमन्यस्योपजीव्यस्यापि नाथत्वमुपपद्यत इत्याशङ्क्य 'यो यो या या तनु भक्तः श्रद्धयार्चितुमिच्छति । तस्य तस्याचला श्रद्धा तामेव विदधाम्यहम् । स तया श्रद्धया युक्तस्तदाराधनमीहते । लभते च तत कामान्मयैव विहितान्हितान्' इति गीतोक्तरीत्या तस्य तच्छरीरकस्य भगवत एव नाथत्वमुपासनाफलप्रदत्व चेति तस्य शरीरेऽपि नाथत्वोक्तिरिति तदुपपत्तिं सूचयितु तत्तनुमित्युक्तम् । देव-

तान्तरस्य तत्तनुत्वमेव कथमित्याशङ्क्यान्तर्यामिब्राह्मणोक्तरीत्या भगवतः सर्वान्तर्यामितया सर्वशरीरत्वं दर्शितं विश्वतनाविति ॥ ३ ॥

**अतियजेत निजां यदि देवता-**
**मुभयतश्च्यवते जुषतेऽप्यघम् ।**
**क्षितिभृतैव सदैवतका वयं**
**वनवृतानवता किमहिद्रुहा ॥ ४ ॥**

**अतियजेतेति** । यदि । निजां आत्मीयाम् । देवताम् । अतियजेत अतिक्रम्य देवतान्तरं यजेत । 'अतिरतिक्रमणे च' इति कर्मप्रवचनीयसंज्ञया तद्योगे द्वितीया । उभयतः । च्यवते । तदेति शेषः । आत्मीया देवता स्वातिक्रमात्त्यजति । इज्यमाना स्वामिद्रोहात्त्यजतीत्युभयभ्रष्टो भवतीत्यर्थः । अघं पापमपि । जुषते भजति च । स्वदेवतातिक्रमादिति भावः । एतेन 'यो वै स्वां देवतामतियजते प्रस्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान्भवति' इति श्रुत्यर्थोऽभिसंहितः । ततः किमित्यत आह—क्षितिभृतेति । वनवता काननवता निर्झरादिजलवता च । क्षितिभृता पर्वतेनैव । वयं गोधनाः । सदैवतकाः, गोसमृद्ध्यर्थं वनवतस्तस्योपजीवनात् । अनवता अस्मानरक्षता । अहिद्रुहा वृत्रारिणा । किम्, न किंचित्साध्यमित्यर्थः । अतः पर्वतातिक्रमोऽस्माकं प्रत्यवायाय स्यादिति भावः । गम्यमानसाधनक्रियापेक्षया कर्तृत्वादहिद्रुहेति तृतीया । 'अहिर्वृत्रासुरे सर्पे' इत्यमरः ॥ ४ ॥

वनवतेति संक्षिप्तमुपजीव्यत्वं प्रपञ्चयति—

**अनघशाद्वलकाननसंपदा**
**नदनदीह्रदनिर्झरशालिना ।**

**बहुपशुः पशुपालकसंतति-**
**र्महिभृता हि भृता न मरुत्वता ॥ ५ ॥**

**अनयेति** । बहवः पशवो यस्याः सा । पशुपालकानां संततिः । अनया रम्या शाद्वला शादैस्तृणैर्युक्ता काननसंपत् वनसमृद्धिर्यस्य तेन । 'नडशादाड्ड्वलच्' इति शादशब्दान्मत्वर्थीयो ड्वलच्प्रत्ययः । नदनदीह्रदनिर्झरशालिना नदः सरस्वान्, नदसहिता नद्यो नदनद्य इति शाकपार्थिवादिवत्समासः । अन्यथा सरूपत्वादेकशेषः स्यात् । ह्रदाः अगाधजलाशयाः निर्झरा गिरिजलप्रस्रवाः । तान् शलति गच्छति प्राप्नोतीति तथोक्तस्तेन । 'शल गतौ' इति धातोर्णिनिः । महिभृता पर्वतेन । हि । भृता पोषिता । न मरुत्वता नेन्द्रेण । पशुसमृद्ध्युपयोगिन्या तृणवनजलसमृद्ध्या गिरिरेव गोपान्बिभर्ति, नेन्द्र इत्यर्थः ॥ ५ ॥

यत एवमुपजीव्यतयास्माकं गिरिरेव देवतेति तदतिक्रमे प्रत्यवायः, ततस्तमेव शक्रमखाय संभृतैर्द्रव्यैः पूजयतेत्याह—

**अचलमर्चत किं विबुधैश्चलैः**
**शुभवनं भवनं च दिवौकसाम् ।**
**क्षममनेन वने परिरक्षिते**
**न हरिणा हरिणानपि बाधितुम् ॥ ६ ॥**

**अचलमिति** । शुभवनं मनोज्ञकाननम् । 'शुभो मञ्जुप्रशस्तयोः' इति यादवः । दिवौकसां देवानाम् । भवनं विहारस्थानभूतं च । अचलम् । अर्चत । चलैः जङ्गमैः । विबुधैः । किम्, न किंचित्साध्यमित्यर्थः । स्थिर एवोपासनीयो नास्थिर इति अचलचलपदाभ्यां स्तुतिनिन्दे व्य-

ज्येते । शक्रमखाय संभृतैर्द्रव्यैश्च गिरिरिज्यते चेत्स प्रकुप्य किंचिदकुशलं कुर्यात्तत्राह—क्षममिति । अनेन गिरिणा । परिरक्षिते । वने अस्मदावासकानने । हरिणा शक्रेण । हरिणान् एणानपि, अतिफल्गूनपीति भावः । बाधितुम् । न क्षम न शक्यम् । द्वितीयचतुर्थपादयोस्तत्तत्पादभागवृत्तियमकमिति यमकद्वयसंसृष्टिः ॥ ६ ॥

**गिरिषु विष्णुविभूतिषु युज्यते**
**निखिलदेवमयीषु च गोषु नः ।**
**तदुभयाश्रितवृत्त्युपजीविनां**
**गुरु चिरं रुचिरं च समर्चनम् ॥ ७ ॥**

**गिरिष्विति** । विष्णुविभूतिषु महीधरणक्षमतया 'यद्यद्विभूतिमत्सत्त्वम्' इत्यादिश्लोकोक्तरीत्या भगवत्कलारूपेषु गिरिषु । निखिलदेवमयीषु 'शृङ्गयोर्हरिधातारौ शृङ्गमध्ये स्थितः शिवः' इत्यादिस्मरणात् सकलदेवताव्याप्तशरीरासु । गोषु च । तदुभयाश्रितवृत्त्युपजीविनाम्, गावो गिरयश्च ते । तेषामुभयं तदुभयम् । तदाश्रिता तदधीना वृत्तिः घृतक्षीरकन्दमूलादिरूपा तदुपजीविनाम् । नः । चिरम् । गुरु महत् । रुचिर मनोहरं च । समर्चनम् । युज्यते ॥ ७ ॥

**अभिमतं गिरयः कृतसत्क्रिया**
**ददति दर्शितदैवतभूमिकाः ।**
**हरितरक्षुमुखैरपि विग्रहै-**
**रहितमाहितमानविपर्ययाः ॥ ८ ॥**

**अभिमतमिति** । कृतसत्क्रियाः कृताराधनाः । गिरयः । दर्शितदै-

वतभूमिकाः दर्शितदेवतामूर्तयः सन्तः । 'भूमिका रचनायां स्यान्मूर्त्यन्तरपरिग्रहे' इति विश्वः । अभिमतम् इष्टम् । ददति आराधकाय प्रयच्छन्ति । आहितमानविपर्यया: कृतावमानाः । त एव गिरयः । हरितरक्षुमुखैः सिंहव्याघ्रप्रमुखैः । विग्रहैः शरीरैः । अहित विपदमपि । ददति । अतः कृते फलावश्यंभावात्, अकृते च दण्डापादनाच्च गिरिपूजनमवश्यं कर्तव्यमिति भावः ॥ ८ ॥

पशुभिरद्रिचरैरुपकल्पिते
व्रजनये जनयेम न विप्लवम् ।
क्षितिभृदेष समीहितसिद्धये
जनमितं न मितंपचतां नयेत् ॥ ९ ॥

**पशुभिरिति** । अद्रिचरैः अद्रौ चरद्भिः । पशुभिः गोमहिष्यादिभिः । उपकल्पिते संपादिते । व्रजनये व्रजस्य नीतौ क्षेमे इति यावत् । विप्लवं बाधम् । न जनयेम न संपादयेम । गोधनानां क्षेमं पश्वधीनम्, पशवश्चाद्रिमुपजीवन्ति, अतोऽद्रेरवमाने पशूनां जीवनहान्या गोधनानामेव बाधः स्यात्; स मा भूदित्यर्थः । एषः क्षितिभृत् । समीहितसिद्धये इष्टलाभाय । इत प्राप्तम् । जनम् । मितंपचतां क्षुद्रताम् । न नयेत् । उत्कर्षमेव प्रापयेदित्यर्थः ॥ ९ ॥

अपि च साधु गवामभिवर्धना-
दनृतहानिजया निजयाख्यया ।
भजति गोपगणैरभिराध्यतां
वनमयं नमयन्फलसंपदा ॥ १० ॥

**अपि चेति** । किं च, फलसंपदा फलसमृद्ध्या । वनम्, नमयन् अवनतं कुर्वन् । अयं गोवर्धनो गिरिः । साधु सम्यक् । गवाम् । अभिवर्धनाद्धेतोः । अनृतहानिजया असत्यापायप्रभवया, अन्वर्थयेति यावत् । निजया आख्यया स्वेन नाम्ना । गोपगणैः । अभिराध्यतां आराध्यताम् । भजति । गवां पोषक एव गोपानामाराध्यः । तत्पोषकत्वं च तस्य नामैव प्रथयतीत्यर्थः ॥ १० ॥

**हरति तापमसावुपसेदुषां**
**महिमवान्हिमवानिव दक्षिणः ।**
**वितनुते मणिरश्मिभिरप्यसौ**
**सुरपतेरपतेज इवास्पदम् ॥ ११ ॥**

**हरतीति** । महिमवान् औन्नत्यायामदेवतात्मकत्वादिरूपमहिमवान् । अत एव, दक्षिणो हिमवानिव स्थितः । असौ गिरिः । उपसेदुषां स्वात्मानमुपागतानाम् । तापं हरति । अपि चेत्यर्थः । असौ गिरिः । मणिरश्मिभिः रत्नकिरणैः । सुरपतेः । आस्पद दिवम् । अपतेजः निरस्ततेजस्कमिव । वितनुते करोति । उद्गतैस्तैः मणिकिरणैः द्यौर्निस्तेजस्केव भवतीत्यर्थः ॥ ११ ॥

**प्रदिशता मधुमूलफलानि नः**
**सतरुणा तरुणाद्भुतवीरुधा ।**
**उपकृतं गिरिणा तदिहार्प्यतां**
**रसततं सततं हविराहृतम् ॥ १२ ॥**

**प्रदिशतेति** । नः अस्माकम् । मधु क्षौद्रमासवं वा मूलानि फलानि च । प्रदिशता । तत्र निमित्तम्, सतरुणा तरुभिः सहितेन । तरुण्यः अजरठाः अद्भुताः अन्यत्र अलभ्यत्वात् आश्चर्यभूताः वीरुधः प्रतानिन्यो लता

यस्मिंस्तेन । गिरिणा । उपकृतम् । तत् तस्मात् । रसैः मधुराम्लादिभिः ततं रसबहुलम् । आहृतं संपादितम् । हविः । इह अस्मिन्नेव गिरौ । सततम् । अर्प्यताम् । अस्मदाहृतानां हविषामुपकारकेऽस्मिन्नेव सदा समर्पणं युक्तमित्यर्थः ॥ १२ ॥

समरुता मरुतापजितामुना
नदवता दवतान्तिदवीयसा ।
श्रमहृता महता कृतविश्रमा
वयमितो यमितोल्बणशाक्कराः ॥ १३ ॥

**समरुतेति** । समरुता मरुत्सहितेन । मरुतापजिता निर्जलप्रदेशकृत तापं जयता । तत्र निमित्तम्, नदवता नदबहुलेन । भूम्नि मतुप् । दवो वनाग्निस्तेन तान्तिः ग्लानिः तस्या दवीयसा दूरस्थितेन, तद्रहितेनेति यावत् । महता । अमुना गिरिणा । श्रमहृताः श्रान्त्यभिभूताः । वयम् । कृतविश्रमाः कृतश्रमापनयनाः । इतः इहैव गिरौ । यमिताः दमिताः उल्बणाः उद्धताः शाक्कराः पुंगवा यैस्तथाभूताश्च । 'शाक्करो वृषभे च्छन्दोविशेषे शाक्करं मतम्' इति विश्वः । पुंगवदमनादिकमप्यस्माभिरिममेव गिरिमुपजीव्य स्थितैः क्रियत इत्यर्थः । अतः सर्वप्रकारेणाप्ययमुपजीव्य इति भावः । एतदाश्रयणात्सुखेनास्माकं सकलफलसिद्धिरित्येतद्यजनमेव युक्तमिति फलितोऽर्थः । अत्र चतुर्ष्वपि पादेषु तत्तत्पादभागावृत्तियमकमिति यमकचतुष्टयसंसृष्टिः ॥ १३ ॥

बहुमतो मनुजा दधते धृतिं
बहुमतोऽयमनन्यधृतिः सताम् ।

गिरिशतोन्नतिमानधिको ह्यसौ
गिरिशतोषकृतोऽपि महीभृतः ॥ १४ ॥

**बहुमिति**। मनुजाः मनुष्याः। अतः अस्मात्पर्वताद्धेतोः। बहु अधिकाम्। 'वोतो गुणवचनात्' इति विकल्पनान्डीषभावः। धृतिं सौख्यम्। दधते। 'धृतिः सौख्येऽपि धारणे' इति यादवः। एतदाश्रयात्सुखेन वसन्तीत्यर्थः। अनन्यधृतिः न विद्यतेऽन्य आश्रयत्वेन यस्याः सा अनन्या अनितरसाधारणी धृतिर्धैर्यं यस्य स तथोक्तः। अयं गिरिः। सताम्। बहुमतः पूजितः। पूजार्थत्वाद्वर्तमाने क्त इति तद्योगात्षष्ठी। हि यस्मात्। गिरीणां शतस्य या उन्नतिस्तद्वान्। असौ। गिरिशतोषकृतः पार्वतीप्रदानेन शंभोः संतोषकृतः। महीभृतः हिमालयादपि। अधिकः। अतः सतां पूज्य इति। अतोऽपि हेतोरयमस्माभिः पूजनीय इति भावः। अत्र पूर्वोत्तरार्धयोः पादद्वयादियमकमिति यमकद्वयसंसृष्टिः ॥ १४ ॥

सनगरा नगराजिमतामुना
कुहरिणा हरिणा समसंपदा।
सततमाततमानमहीयसी
वसुमती सुमतीश्वर धार्यते ॥ १५ ॥

**सनगरेति**। हे सुमतीश्वर धीमतां श्रेष्ठेति स्वपितुः संबोधनम्। तस्यैव प्राधान्येन श्रावणीयतयोपक्रमात्। आततेन विस्तृतेन मानेन परिमाणेन महीयसी महत्तरा। सनगरा नगरैरुज्जयिन्यादिभिः सहिता। वसुमती भूमिः। नगराजिमता वृक्षपङ्क्तिमता। कुहरिणा गह्वरवता। हरिणा इन्द्रेण। समसंपदा तुल्यरत्नाद्यैश्वर्येण। अथवा विष्णुना तुल्यभूधरणक्षमबलसंपदा। अमुना गिरिणा। सततं धार्यते। यमकचतुष्टयसंसृष्टिः ॥ १५ ॥

सुरसगन्धविभूतिनिधे हितं
परिगृहाण निजे पशुपालने ।
सुरसगन्धविभूति निधेहि तं
हरिमवेत्य गिरिं हविरुत्तमम् ॥ १६ ॥

**सुरेति** । हे सुरसगन्धविभूतिनिधे समानो गन्धो बान्धवो यस्याः सा सगन्धा । 'गन्धो गन्धक आमोदे लेशे संबन्धिगर्वयोः' इति विश्वः । 'पिण्डगन्धलोहित' इत्यादिवक्तव्यात्समानस्य सभावः । सुराणां सगन्धाया विभूतेरैश्वर्यस्य निधे । सुराणामेतद्विभूतेश्च समानबन्धुत्वेन सुराणां विभूतिरेवाध्यवसिता । सुराणां तदीयत्वसबन्धात् एतद्विभूतेः सादृश्यसंबन्धात् । तथा च सुरविभूतिनिधानभूतेत्यर्थः । निजे आत्मीये । पशुपालने । हितं परिगृहाण । किं हितं तत्राह—सुरसगन्धविभूति शोभनानां रसानां गन्धानां च समृद्धिर्यस्य तत् । उत्तमं हविः कर्म । गिरिम् । त प्रसिद्धम् । हरिम् । अवेत्य विचिन्त्य । निधेहि तस्मै समर्पयेत्यर्थः । इदं प्रथमतृतीयपादयोरैकरूप्यात्संदंशनामकं पूर्णयमकम् । यत्पादेऽर्धके वा भवति तत्पूर्णयमकम् । ततोऽन्यत्खण्डयमकम् ॥ १६ ॥

विशुद्धतोयौघपरीतपार्श्वे
शुद्धाशयाः श्वेत इवान्तरीपे ।
निराशिषो नित्यमिहाश्रयन्ते
नैःश्रेयसं तात निवृत्तिधर्मम् ॥ १७ ॥

**विशुद्धेति** । हे तात । विशुद्धतोयौघपरीतपार्श्वे निर्मलैर्जलप्रवाहैः परिवृतपार्श्वे । इह पर्वते । श्वेते अन्तरीपे इव । श्वेतद्वीपे इव । 'द्वीपोऽ-

स्त्रियामन्तरीपं यदन्तर्वारिणस्तटम्' इत्यमरः। श्वेतद्वीपो नाम क्षीरोदमध्यवर्ती द्वीपविशेषः 'शाकद्वीपं समाश्रित्य क्षीरोदः सागरः स्थितः। श्वेतद्वीपश्च तन्मध्ये नारायणपरायणाः' इत्यादिना पुराणेषु प्रसिद्धः। तत्र विशुद्धतोयेति विशेषणम्, क्षीरोदस्य क्षीररूपोदकाभिप्रायेण व्याख्येयम्। अन्यत्समानम्। शुद्धाशयाः शुद्धान्तःकरणाः। निराशिषः वीतस्पृहाः। 'आशीरुरगदंष्ट्रायां शुभवाक्याभिलाषयोः' इति यादवः। नैःश्रेयसं मोक्षान्वयिनम्। निःश्रेयसशब्दात् 'तस्येदम्' इत्यण्प्रत्ययः। निवृत्तिधर्मं संसारविरोधिनं निवृत्तिरूपं धर्मम्। आश्रयन्ते नित्यं सेवन्ते इत्यर्थः॥

**इह वासमही समहीनगुणे**
**स्थिरकुञ्जगृहे जगृहे विबुधैः।**
**अयमानमतां न मतां न तनुं**
**क्षितिभृद्भजते भज तेन धृतिम्॥ १८॥**

**इहेति**। विबुधैः देवैः। समहीनगुणे समन्तात् अहीनगुणे उत्कृष्टगुणे। स्थिरकुञ्जगृहे स्थिरा दृढाः कुञ्जगृहाः लतागृहाः यस्मिंस्तस्मिन्। इह पर्वते। वासमही निवासभूमिः। जगृहे। अयं क्षितिभृत्। आनमतां नित्यं प्रह्वीभवताम्। मतां इष्टाम्। तनुम्। न न भजते भजत एव, नमतां तत्तदभिमतरूपपरिग्रहेण प्रसीदत्येवेत्यर्थः। स्थावरत्वेन शैलस्य देवतारूपपरिग्रहासंभावनानिषेधाय नञ्द्वयम्। 'संभाव्यनिषेधनिवर्तनाय द्वौ प्रतिषेधौ' इति वामनः। तेन फलावश्यंभावेन हेतुना। धृतिं गिरिपूजने मनस्तुष्टिम्। भज। 'तृप्तिधृतितुष्टयः' इति यादवः। **तोटकवृत्तमिदम्**॥ १८॥

**तटभूमिरसौ जयति त्रिदिवं**
**पवनागततापवनागतता।**

इह देवगणैरनिशाध्युषिता
युतकोकनदायुतकोकनदा ॥ १९ ॥

**तटभूमिरिति** । इह पर्वते । पवनागततापवनागतता पवनेन वायुना अगततापस्य अप्राप्ततापस्य वायुसंचाराच्छीतलस्य वनस्य अगैः वृक्षैः तता व्याप्ता । युतकोकनदा संयुक्तरक्तोत्पला । अयुतकोकनदा अयुतकोकाः अनेकसहस्रचक्रवाकाः नदाः सरस्वन्तो यस्यां सा । देवगणैः । अनिशम् अध्युषिता । असौ । तटभूमिः । त्रिदिवम् । जयति । ततोऽप्यतिरिच्यत इत्यर्थः । पादार्धावृत्तिरूपयमकद्वयसंसृष्टिः ॥ १९ ॥

प्रकृष्टवंशोदयमाननीयः
प्रभूततोयप्रथितानुरूप्याः ।
प्रवालमुक्तामणिचित्रिताङ्गीः
पत्नीरयं प्रापयते पयोधिम् ॥ २० ॥

**प्रकृष्टेति** । प्रकृष्टानां महापरिमाणानां वंशानां वेणूनां उदयेन माननीयः पूजनीयः सुन्दरः । अयं गिरिः । पयोधिं समुद्रम् । प्रभूततोयेन प्रथितानुरूप्याः प्रसिद्धसमुद्रानुरूप्याः । प्रवालमुक्तामणिचित्रिताङ्गीः । पत्नीः नदीः । प्रापयते गमयति । गत्यर्थत्वाद्द्विकर्मकता । यथा महाकुलीनः पुरुषो योग्याय वराय तदनुरूपां कन्यामलंकृत्य दत्त्वा तद्गृहं प्रस्थापयति तद्वदिति ध्वन्यमानोऽर्थः । नदीष्वपि विद्रुममौक्तिकोत्पत्तिः कविसमयसिद्धा । अत एव प्रतिप्रयाणसर्गेऽपि गङ्गावर्णने दृश्यते 'सरित्सहस्रैरभिगम्यमाना शिलोच्चयैरन्तरिता दधाति । प्रवालमुक्ताप्रभृतेः प्रसूतिः पत्नी पयोधेरियमानुरूप्यम्' इति ॥ २० ॥

नन्द नीतिधन सर्वनन्दनी
तत्त्वयातमतिभूष तत्त्वया ।
साधुना क्षितिभृतो रसाधुना
सेव्यतामिह गतेन सेव्यताम् ॥ २१ ॥

**नन्देति** । नन्द, नीतिधन, तत्त्वयातमतिभूष, इति च संबोधनानि। नीतिः धनं यस्येति स तथोक्तः। तत्त्वं अबाधितमर्थं याता विषयीकृतवती मतिः भूषा अलंक्रिया यस्येति तथोक्तः। तत् तस्मात् प्राग्वर्णिताद्रिरेगौरवाद्धेतोः। साधुना सज्जनेन। अत एव, इह भुवि। सेव्यतां गतेन त्वया। सर्वनन्दनी सर्वेषामानन्दकरणी। करणार्थे ल्युट्। टित्त्वान्ङीप्। क्षितिभृतः पर्वतस्य। रसा भूमिः। अधुना इदानीम्। सेव्यताम्। कर्मणि लोट्। पादाद्यन्तभागावृत्तिरूपयमकानां संसृष्टिः। **रथोद्धता** वृत्तम् ॥

नम्यतेह नियता विभूतये
भूतयेश्वरतया विराजते ।
राजतेदृशतटीमहीयसे
हीयसे न यदि नाम नम्यते ॥ २२ ॥

**नम्यतेति** । इह पर्वते। भूतया सत्यया यथार्थया। 'भूतं न्याय्ये समे प्राप्ते यथार्थातीतयोरपि' इति रत्नमाला। ईश्वरतया फलप्रदानसामर्थ्येन। विभूतये संपदे। नम्यता नमस्कार्यता। नियता फलाव्यभिचारिणी। विराजते। अस्य गिरेरैश्वर्यं सत्यमिति तत्पूजायाः फलव्यभिचारः कदापि न भवतीत्यर्थः। अथ वा, राजतेदृशतटीमहीयसे राजतीभिः रजतमयीभिः ईदृशीभिः परिदृश्यमानरूपाभिः तटीभिः महीयसे महत्तराय।

अस्मै गिरये इति शेषः । यदि नाम नम्यते यदि त्वया नमस्क्रियते । न हीयसे तावता तव हानिर्नास्तीत्यर्थः । नामेति क्रोधवचनत्वं सूच्यते । 'नाम प्रकाश्यसंभाव्यक्रोधोपगमकुत्सने' इत्यमरः । यदि तव फलसंदेह-स्तदापि 'यदि न स्यात्ततः किं स्यात्' इति न्यायेन तत्पूजनं युक्तमिति भावः । अत्र पादान्त्यभागानां पादान्तरादिषु यमकं शृङ्खलायमकं नाम ॥

अयोगनिद्रस्य हरेरिदानीं
मान्ये पदे मानसतः प्रवृत्ताः ।
त्वदाशयस्वच्छसरित्प्रवाहे
हंसैः समं वासमिहाश्रयेम ॥ २३ ॥

अयोगनिद्रस्येति । इदानीं शरत्समये । अयोगनिद्रस्य हरेः । मान्ये पूज्ये । पदे चरणे । मानसतः प्रवृत्ताः मानसेन प्रवृत्ताः तद्भक्ताः वयम् । त्वदाशयस्वच्छसरित्प्रवाहे त्वदन्तःकरणवत्स्वच्छाः सरित्प्रवाहाः यस्मिंस्त-स्मिन् । इह पर्वते । हंसैः समं यथा तथा । वासम् । आश्रयेम । अङ्गीकुर्याम । यथा मानसात्सरसो हरेः पदे गगने प्रवृत्ता हंसाः स्वच्छसरिल्लोभादिहागत्य वसन्ति, तथा वयमपि वसेमेत्यर्थः । ततश्चायमस्माकं साक्षान्निवासतया-प्युपजीव्यो भवतीत्यस्य पूजनमावश्यकमिति भावः ॥ २३ ॥

निशाकरस्य स्फटिकेष्विहाधिकं
सुजातरूपा श्रयतो विभा सिता ।
रविप्रभा च स्पृशतीव सांध्यतां
सुजातरूपाश्रयतो विभासिता ॥ २४ ॥

निशाकरस्येति । इह पर्वते । श्रयतः चन्द्रमण्डलपर्यन्तमुन्नतमिम

पर्वत सामीप्यादाश्रयत निशाकरस्य । सुजातरूपा मनोज्ञरूपा । विभा । स्फटिकेषु अधिक सिता स्फटिकतटसपर्के तत्प्रभामिश्रणादत्यन्तं शुभ्रायते । किं च, रविप्रभा । सुजातरूपाश्रयत उत्तमसुवर्णाश्रयणात् । 'चामीकर जातरूपम्' इत्यमर' । विभासिता दीप्ता सती । सांध्यता स्पृशतीव सध्यायामिवारज्यते इत्यर्थ' । द्वितीयचतुर्थपादयोरैकरूप्यात् सदष्टक नाम यमकम् । **वंशस्थवृत्तम्** ॥ २४ ॥

**न दन्तिनोऽस्मिन्मुदिता नदन्ति नो**
**वनस्थलीलास्त्विह देवनस्थली ।**
**व्रजाधिपाघोन्नतितीव्रजाधिपा**
**प्रभाततास्राश्मगणप्रभातता ॥ २५ ॥**

**नेति** । अस्मिन् पर्वते । दन्तिन' गजा । मुदिता' सन्त । न नो नदन्ति नदन्त्येव । हे व्रजाधिप गोकुलप्रभो । इह पर्वते । अघोन्नतितीव्रजाधिपा अघोन्नति पापोन्नतिरेव तीव्र भृशोष्णम् । 'तीव्र' कटुभृशोष्णेषु' इति रत्नमाला । ततो जात आधिं मानसताप पिबति हरतीति तथोक्ता पिबते. 'आतोऽनुपसर्गे क । प्रभाततास्राश्मगणप्रभातता प्रभातताम्राभि उद्यदरुणकिरणाञ्चितवेलारुणाभि अश्मगणप्रभाभि मणिगणद्युतिभि. तता व्याप्ता । देवनस्थली प्रस्थादिरूपा विहारभूमि । वनस्थलीला अस्तु वनस्थानामस्माक लीलाकर्त्री भवतु । वनस्था वयमत्रैव विहरेमेत्यर्थ । लीलाशब्दात्तत्करोतिण्यन्तात्पचाद्यचि णिलोपे च लीलाशब्दस्तत्कर्तृविषये साधु. । सर्वेषु पादेष्वाद्यन्तभागावृत्तियमकाना ससृष्टि ॥ २५ ॥

**महीयसी गोपगणाश्रिता मही**
**वनैरुपेता फलपुष्पभावनैः ।**

इह वंशलताविलग्नवालाः
प्रियवाला नतकंधराश्चमर्यः ।
शबरीकबरीनिरीक्षणेन
त्रपमाणा इव निश्चला भवन्ति ॥ २८ ॥

**इहेति** । इह गिरौ । वंशलतासु वंशशाखासु । 'शाखावल्लीप्रियङ्गुषु । लता कस्तूरिकायां च' इति विश्वः । विलग्नवालाः सक्तलाङ्गूलाः । प्रियवालाः प्रेमास्पदीभूतलाङ्गूलाः । अत एव नतकंधराः वालमोचनाय तिर्यग्विवलितकन्धराः । चमर्यः । शबरीणां किरातीनां कबर्याः केशबन्धविशेषस्य निरीक्षणेन । 'तद्बन्धविशेषाः स्युर्वेणीधम्मिल्लकुन्तलकबर्यः' इति हलायुधः । त्रपमाणा इव लज्जाकुला इव । निश्चलाः भवन्ति । **औपच्छन्दसिकं** वृत्तम् ॥ २८ ॥

हरिनीलरुचा लसत्तमिस्रो
दिवसेऽपि स्फुरदोषधिप्रदीपः ।
निशि चैष तपोधनाङ्गदीप्त्या
दिनमोहादविभक्तकोकयुग्मः ॥ २९ ॥

**हरिनीलेति** । एष गिरिः । हरिनीलरुचा इन्द्रनीलप्रभया । लसत्तमिस्रः लसदन्धकारः सन् । दिवसेऽपि स्फुरदोषधिप्रदीपः, इन्द्रनीलप्रभान्धकारितप्रदेशेषु दिवापि रात्रिवदोषधिलता दीपवत्स्फुरन्तीत्यर्थः । किं च, निशि रात्रावपि तपोधनाङ्गदीप्त्या तपस्विनां देहशोभया । दिनमोहात् दिवसभ्रान्त्या । अविभक्तकोकयुग्मः संगतचक्रवाकमिथुनः, अस्तीत्यर्थः ।

एवं दिवा रात्रिधर्मप्रवर्तनात्, रात्रौ दिवसधर्मप्रवर्तनाच्चायमत्याश्चर्यमहिमशालीति भावः ॥ २९ ॥

व्रजवैरवतीषु वल्लवानां
वृष सेनासु सदानवासु देवः ।
अचलाकृतिराशु नैष गोप्ता
वृषसेनासु सदा न वासुदेवः ॥ ३० ॥

**व्रजेति** । वल्लवानां वृष गोपश्रेष्ठ । 'वृषो धर्मोक्षपुंभेदरेतःशक्राखुवाजिषु । राशौ शृङ्ग्यां बले ना स्यान्मूषकश्रेष्ठयोस्त्रिषु' इति रत्नमाला । वृषसेनासु वृष्णा इन्द्रेण सेनासु सनाथासु । 'इनः सूर्ये प्रभावपि' इत्यमरः । सेनासु । सदानवासु असुरैः सहितासु । व्रजवैरवतीषु गोकुलद्वेषवतीषु सतीषु । अचलाकृतिः पर्वतमूर्तिः । एष देवः वासुदेवः । सदा आशु । न न गोप्ता गोप्तैव । इन्द्रो गिरिपूजया प्रकुपितो दानवैः संधाय तैरपि सह स्वसेनां वल्लवेषु प्रहिणोतु । यदा यदा प्रहिणोति, तदा सर्वदाप्यस्माकमयमेव पर्वतरूपधारी भगवान्रक्षक इति ततो न भेतव्यमित्यर्थः ॥ ३० ॥

मधुना सविभव सन्तं
मदनधनं यं वदन्ति शुभदिवसं तम् ।
नियतमिहैव वसन्तं
निष्कामधियोऽपि निर्विशन्ति वसन्तम् ॥ ३१ ॥

**मधुनेति** । हे सविभव ऐश्वर्यशालिन् । मधुना सन्त पुष्पसमयत्वात्पुष्परसेन प्रशस्तम् । यम् । मदनधनं अनङ्गसर्वस्वम् । वदन्ति । तम्

अनुष्णाशीतत्वात् शुभाः हृद्याः दिवसाः अस्येति शुभदिवसम् । नियतं सदा । इहैव वसन्तम्, सर्वकालवासोऽत्रैवेत्येवकारार्थः । वसन्तं वसन्तसमयम् । निष्कामधियोऽपि । निर्विशन्ति उपभुञ्जते । ततश्च विभवशालिना त्वया अत्रैव स्थित्वोपभोक्तव्यमिति भावः । पादचतुष्टयान्तयमकम् । मात्रावृत्तेष्वार्यागीतिरियम् ॥ ३१ ॥

कानन दधदसौ सदोन्नम-
त्काञ्चनारककुभं सदृक्षकः ।
मन्दरस्य महता स्ववर्ष्मणा
कां च नार ककुभं सदृक्षकः ॥ ३२ ॥

**काननमिति** । सदा उन्नमन्तः संवर्धमानाः काञ्चनाराः कोविदाराः ककुभाः अर्जुनाश्च वृक्षविशेषाः यस्मिंस्तत् । काननम् । दधत् । सन्ति विद्यमानानि ऋक्षाणि नक्षत्राणि यस्मिन्निति सदृक्षकः नक्षत्रपथपर्यन्तमुन्नतः । 'शेषाद्विभाषा' इति कप् । अत एव, मन्दरस्य सदृक्षकः । असौ गिरिः । महता । स्ववर्ष्मणा स्वशरीरेण । 'शरीरं वर्ष्म विग्रहः' इत्यमरः । कां च ककुभं कां वा दिशम् । न आर न प्राप । 'ऋ गतौ' इत्यस्य लिटि रूपम् । स्वभोगेन सर्वामपि दिशं व्याप्तवानिति भावः ॥ ३२ ॥

अनेहसा हानिरुपैति नेह सा
न कंदरस्थस्य दिशत्यकं दरः ।
अपास्य तां भीतिमसावुपास्यतां
सदा नवा भूमिरियं सदानवा ॥ ३३ ॥

**अनेहसेति** । अनेहसा कालेन । हानिः उपैति, यत्र क्वचन स्थितानां

कालक्रमेणावश्यं हानिरायाति । इह सा न, इह स्थितानां कदापि हानिर्न भवति नित्यं संपदेव वर्तेत इत्यर्थः । कंदरस्थस्य एतद्दरीस्थस्य । दरः भयम् । अक दुःखम् । न दिशति न प्रयच्छति । 'अकं पापे च दुःखे च' इति विश्वः । भयाभावात्तत्कृतं दुःखमपि नास्तीत्यर्थः । तां भीतिम् । अपास्य । असौ गिरिः । उपास्यताम् । इन्द्रोपहारस्यान्यत्र दाने स यत्किंचित्कुर्यात्तत्राह—सदा नवा सर्वदा रमणीया । इयं भूमिः पर्वतभूमिः । सदानवा असुरसहिता । तथा च यदीन्द्रः किंचित्कुर्यात्तदा अत्रत्या दानवा एव तद्विरोधिनस्तस्य शिक्षां करिष्यन्तीति भावः ॥ ३३ ॥

**समिन्धतेऽस्मिन्नजहत्समाधिकाः**
**समाधिकातीतधियः स्थिराशया ।**
**स्थिराशयाश्च व्रतिनः सदारसाः**
**सदारसाध्येषु तपःस्ववस्थिताः ॥ ३४ ॥**

**समिन्धत इति** । अस्मिन् गिरौ । स्थिराशया स्थिरपुरुषार्थमोक्षलिप्सया । अजहत्समाधिकाः अजहत् अत्यजन् समाधिः ध्यानं येषां ते तथोक्ताः, सदा समाधिस्था इति यावत् । सममधिक चातीता धीः येषामिति समाधिकातीतधियः, समाभ्यधिकरहितबुद्धय इत्यर्थः । ते समिन्धते दीप्यन्ते । किंच, सदा रसो विषयाभिलाषो येषां ते सदारसाः । स्थिराशयाः दृढभावाः। व्रतिनः नियमवन्तश्च । सदारसाध्येषु दारसहितैः कर्तव्येषु अग्निहोत्रादिषु । तपःसु चान्द्रायणादिषु । अवस्थिताः प्रवृद्धाः ॥

**वसत्यमुष्मिन्वनदेवताद्भुता**
**विभाति भास्वत्तिलकालिकानना ।**

विचित्ररत्ना महती च मेखला
विभाति भास्वत्तिलकालिकानना ॥ ३५ ॥

**वसतीति**। अमुष्मिन् गिरौ। अद्भुता आश्चर्यभूता। विभातिभास्वत्तिलकालिकानना विभया प्रभया अतिभास्वान् भास्वन्तमतिक्रान्तः तिलको रत्ननिर्मितो यस्मिंस्तादृशं अलिकं ललाटं यस्य तत् आननं यस्या इति बहुव्रीहिद्वयगर्भबहुव्रीहिः। तथाभूता, वनदेवता वसति। किंच, विचित्ररत्ना। महती। भास्वत्तिलकालिकानना भास्वती भ्राजमाना तिलकानां क्षुरकवृक्षाणां आलिः पङ्क्तिः यस्मिन् तत् कानन यस्याः सा। मेखला तटभूमिः विभाति ॥ ३५ ॥

तपस्विनामात्मविदां निवासैः
समानभूमावसमानभूमा।
इहाटवी काञ्चनकर्णिकार-
परागताम्राप्यपरागताम्रा ॥ ३६ ॥

**तपस्विनामिति**। तप एषामस्तीति तपस्विनः। 'तपःसहस्राभ्यां विनीनी:' इति विनिप्रत्ययः। तेषाम्, आत्मविदां ब्रह्मज्ञानां व्यासादीनाम्। निवासैः आश्रमैः। समानभूमौ तुल्यधरणितले तद्वत्पवित्रे। इह गिरौ। समानभूमा अनुपममहिमा। काञ्चनकर्णिकारपरागताम्रा काञ्चनाः चम्पकाः। 'काञ्चनः कर्णिकारे स्याच्चम्पके नागकेसरे' इति विश्वः। कर्णिकारा वृक्षोत्पलाख्या वृक्षाः तेषां परागैः ताम्रापि। अपरागताम्रा अपरागताः अनपगताः आम्राः चूतवृक्षाः यस्यां सा तथोक्ता। परागताम्रा अपरागताम्रा इति श्लेषमूलविरोधाभासद्योतकोऽपिशब्दः। अटवी वर्तते ॥ ३६ ॥

**सरःसु जातैर्नलिनैः सुजातै-**
**रपां तरङ्गैश्च सुधान्तरङ्गैः ।**
**इहासमेऽतिव्रततौ समेति**
**मरुत्तुषारः श्रमरुत्तुषारः ॥ ३७ ॥**

**सरःस्विति** । सर सु कासारेषु । जातै । सुजातै उत्तमै । नलिनै. । सुधायाः अमृतस्य अन्तरङ्गै आप्तै तत्तुल्यरसै । अपा तरङ्गै. जलोर्मिभिश्च । असमे सर्वातिशायिनि । अतिव्रततौ अत्यन्त व्रततयो वल्ल्यो यस्मिन् । 'वल्ली तु व्रततिर्लता' इत्यमरः । तस्मिन्निह पर्वते । श्रमरुत्तुषार· श्रमरुधः श्रान्तिरोधिनः तुषारा शीकरा यस्मिन् । तुषार शीतल । मरुत् । समेति आयाति । 'तुषारो हिमभेदेऽपि शीकरे शिशिरेऽपि च' इति विश्वः ॥ ३७ ॥

**यमभिप्लुतमम्बुधरैरभितः**
**सरसा सरसास रसा सरसा ।**
**स्थिरधर्म तया गिरिराद्रियते**
**स मया समयासम या समया ॥ ३८ ॥**

**यमिति** । हे स्थिरधर्म दृढव्रत । अम्बुधरै· मेघै । अभिप्लुत अभित सिक्तम् । य गोवर्धनम् । अभितः सर्वत । 'अभित परित' इत्यादिना द्वितीया । रसा भूमि. । सरसा सरसा सर्वैः सरोभि· । वीप्साया द्विरुक्ति· । सरसा जलसहिता । आस बभूव । आसेति बभूवार्थे तिङन्तप्रतिरूपकमव्ययमिति शाकटायन. । 'अस गतिदीप्त्यादानेषु' इति धातोर्दीप्त्यर्थक वा । सरसेति जातावेकवचनम् । अन्यत्सरसेति पद रसेन वीर्येण

तृणाद्युत्पादनशक्त्या सहितेति भूमिविशेषणं वा द्रष्टव्यम्। स्वतः सारक्षेत्रभूता यस्य पर्यन्तभूमिः मेघाभिवृष्टशिखरजलप्रवाहपतनात्तत्र तत्र निष्पन्नैः सरोभिर्जलभूयिष्ठा बभूवेत्यर्थः । स गिरिः । तया रसया हेतुना । मया आद्रियते, तृणजलसमृद्धा भूमिर्गोधनानामपेक्षितेति तदर्थं मयाद्रियत इत्यर्थः । हे समयासम समयेषु शास्त्रेष्वाचारेषु वा अनुपम । या रसा । समया अस्माकं निकटे स्थिता आद्रियत इति पूर्वेण संबन्धः । निकटे तादृशी भूमिरत्यन्तमुपयोगिनीति भावः । 'समयानिकषाशब्दौ समीपे त्वव्यये मतौ' 'रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः । शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे' इति च विश्वः ॥ ३८ ॥

**प्रणम तमिममचलममर-**
**महितमहितमहितमहित ।**
**भजनमलघु विफलमिह न**
**सदयसदय सदय सदय ॥ ३९ ॥**

**प्रणमेति** । अमरमहितम् अमरैः पूजितम् । भूते क्त इति तृतीयासमासः । तमिमं पूर्वोक्तगुणविशिष्टं संनिहितम् । अचलम् । प्रणम प्रकर्षेण नमस्कुरु । अहितमहितमहितेति संबोधनम् । तमयति ग्लपयतीति तमः । 'तमु ग्लानौ' इति धातोर्ण्यन्तात्पचाद्यच् । 'णेरनिटि' इति णिलोपः । अहेः वृत्रासुरस्य तमः इन्द्रः । स एव हितमः अतिहीनः, इत्युपदेशः । 'हि गतौ' इति धातोर्विंचि हिशब्दो हीनवाची । 'संज्ञापूर्वको विधिः' इति गुणाभावः । ततस्तमप्प्रत्ययः । तस्य हित हीनपक्षपातिन्निति इन्द्रे तन्दस्यादरं त्याजयितुमित्थं संबोधनम् । इह पर्वते विषये । अलघु महत् । भजनं विफलं न सफलमेवेत्यर्थः। सदयसदय, सदय, सद-

येति त्रीणि संबोधनानि द्वितीयवाक्यान्वयीनि । अयसतः अप्रयतमानस्य अयः यत्नं विना स्वत एव संपद्यमानः शुभावहो विधिः । सन् विद्यमानः अयसदयः यस्येति तथोक्तः, अयत्नलब्धभाग्यशालिन्निति प्रथमसंबोधनार्थः । सतां सत्पुरुषाणाम् अय अभिगन्तः । अयतेः पचाद्यच् । वृद्धसेवापरेति द्वितीयसंबोधनार्थः । दयासहितेति तृतीयसंबोधनार्थः । अत्र यमकस्य ह्रस्वत्रिस्वररूपचित्रालंकारस्य च संसृष्टिः । 'स्वरवर्णस्थानबन्धगतीनां नियमस्तथा । प्रहेलिका च्युतं गूढमेतच्चित्रं निगद्यते' इत्यष्टविधश्चित्रालंकार उक्तः ॥ ३९ ॥

**रत्नोपसंघटितशृङ्गफणासहस्रः**
**स्फारोदितस्फटिकरश्मिविशुद्धकायः ।**
**नित्यं वहन्निजबलेन महीमहीनः**
**पुष्यत्यसौ मधुरिपोरपि भोगयोगम् ॥ ४० ॥**

**रत्नेति** । शृङ्गाणि फणा इव शृङ्गाण्येव फणा इति वा। रत्नैः उपसंघटितं संसृष्टं शृङ्गफणानां सहस्रं यस्य तथोक्तः । सहस्रशब्दोऽत्र बाहुल्यपरः। स्फारैःभूरिभिः उदितैः स्फटिकरश्मिभिः विशुद्धकायः शुभ्रदेहः । निजबलेन महीं नित्यं वहन् । हीनो न भवतीत्यहीनः । असौ गिरिः । मधुरिपोरपि भोगयोगं स्वयं भूभारहरणेन तस्य नैश्चिन्त्यापादनादुपभोगान्वयम् । पुष्यति संपादयति । इतोऽर्थान्तरमपि प्रतीयते । रत्नोपसंघटितशृङ्गं रत्नोपनिबद्धाग्रं फणानां सहस्रं सहस्रसंख्या यस्य । स्फारोदितस्फटिकरश्मिरिव विशुद्धकायः । निजबलेन महीं वहन् । अहीनां इनः प्रभुः शेषः मधुरिपोरपि। भोगेन स्वकायेन शयनीयरूपेण योगं पुष्यतीति । ततश्च शब्दशक्त्या प्रतीयमानेनाप्रस्तुतार्थेन प्रस्तुतार्थस्य उपमानोपमेयभावकल्पनाच्छब्दशक्तिमूलोऽलंकारध्वनिः ॥ ४० ॥

मरुद्गणसमाश्रितो मघवरत्ननीलद्युति-
विंभाति वनमालया विततनित्यतुङ्गाकृतिः ।
कनत्यभिगतः श्रिया कनकरश्मिपीताम्बरः
करोति विधृतिं भुवः कथमसौ न विश्वंभरः ॥

**मरुद्गणेति** । मरुद्गणैः देवगणैः । समाश्रितः, विहारभूमित्वात् । मघवरत्ननीलद्युतिः इन्द्रनीलरुचिभिः श्यामरुचिः । विततनित्यतुङ्गाकृतिः वितता विस्तृता नित्यतुङ्गा सदोन्नता आकृतिर्यस्येति तथोक्तः । तुङ्गानां हि तुङ्गत्वं तदपेक्षया तुङ्गान्तरप्राप्त्यवधिकम्, इह तु एतदपेक्षया तुङ्गस्य कदाप्यभावान्नित्यतुङ्गेति भावः । असौ गिरिः । असावित्येतस्य प्रधानवाक्यस्थितस्य सर्वेष्वङ्गवाक्येषु संबन्धः । वनमालया काननपङ्क्त्या । विभाति । किंच, कनकरश्मिभिः स्वर्णरुचिभिः पीताम्बरः ग्रस्ताकाशः । अत एव, श्रिया शोभया । अभिगतः । कनति दिप्यते । किंच, भुवः भूमेः । विधृति धारणं करोति । असौ इत्थंभूतो गिरिः । कथं न विश्वंभरः, विश्वंभरो विष्णुरेवेत्यर्थः । विष्णुरपि देवगणैः समाश्रितः, इन्द्रनील इव श्यामलद्युतिः, विततशाश्वततुङ्गाकृतिः, वनमाला वैजयन्त्या विभाति । कनकरश्मिभिरिव पीतवर्णेनांशुकेन युक्तः, श्रिया कमलया अभिगतः कनति । भुवश्च, नायिकाया विधृतिं सुखं करोति । 'धृतिः सौख्येऽपि धारणे' इति यादवः । अत्र मरुद्गणसमाश्रितत्वादिसाधनेन पर्वतस्य विष्णुरूपत्वं साधितमिति श्लेषसंकीर्णोऽनुमानालङ्कारः ॥ ४१ ॥

मुहुरवधीरितोऽपि भजतीह युवा गणय-
न्हितमतिभूरितानवसुधे वनितां तरसा ।

सपदि विहाय मानमियमृच्छति तं प्रति सा
हितमतिभूरिता नवसुधेव नितान्तरसा ॥ ४२ ॥

**मुहुरिति** । अतिभूरितानवसुधे अतिभूरिः बहुसुवर्णः तानो विस्तारो यस्याः सा वसुधा यस्य तस्मिन् । 'भूरि प्राज्यसुवर्णयोः' इति विश्वः । इह गिरौ । मुहुः अवधीरितोऽपि पुनःपुनर्निरस्तोऽपि । युवा । हितं गणयन् तस्य सगमेन स्वस्य हितमाकलयन् । तरसा वेगेन शीघ्रम् । वनितां भजति अनुनयेन सेवते । प्रतिसंहितमतिभूरिता सद्य एव यूनः स्वयमनुनयेन उपगताया मतेस्तदिच्छाया भूरिता बाहुल्यं यया, उपगततदनुरागातिशयेति यावत् । 'मतिरिच्छाधिषणयोः' इति रत्नमाला । नवसुधेव प्रत्यग्रसुधेव । नितान्तरसा अतिशयितास्वादा । इयं वनिता । सपदि मान विहाय । तं युवानम् । ऋच्छति प्राप्नोति । उद्दीपनविभावबहुलेऽस्मिन् युवानौ मानादिना क्षणमपि विप्रयोगं न सहेते इत्यर्थः । **नर्कुटकमिदं** वृत्तम् ॥ ४२ ॥

इह मरुतो वहन्ति सुरसिन्धुसगन्धसरि-
द्विकसितहेमकोकनदसौरभसारभृतः ।
मधुकरमौलिदघ्नमदन्तुरदन्तिघटा-
करटकटाहवाहिघनशीकरशीभरिताः ॥ ४३ ॥

**इहेति** । इह गिरौ । सुरसिन्धोः देवगङ्गायाः सगन्धासु समानामोदासु, लक्षणया सदृशीषु, सरित्सु विकसितानां हेमकोकनदानां सौरभसारं उत्कृष्टगन्धं बिभ्रतीति तथोक्ताः । 'सारो बले स्थिरांशेऽर्थे पुमान्न्याय्ये वरे त्रिषु' इति रत्नमाला । उत्तरार्धमेकं पदम् । मधुकराणां मौलिदघ्नेन मौलिप्रमाणेन । 'प्रमाणे द्वयसच्'इत्यादिना दघ्नच्प्रत्ययः ।

मदेन दन्तुरा उन्नतास्तत्प्रवाहवन्तः ये दन्तिघटानां करिसमूहानां करटकटाहाः करटा गण्डाः कटाहा भाजनविशेषा इवेत्युपमितसमासः। 'काकेभगण्डौ करटौ' इत्यमरः। तेभ्यो वहन्तः निर्यन्तः ये घनाः सान्द्राः शीकराः अम्बुकणाः तैः शीभरिताः स्फारीकृताः। मरुतः। वहन्ति वान्ति। 'शीभृ कत्थने' इति धातोरौणादिकेऽरण्प्रत्यये शीभरशब्दः पवर्गचतुर्थयुक्तः। 'शीभरः स्फाररम्ययोः' इति कोशकाराः। आद्यविशेषणेन मरुतां सौरभ्यं द्वितीयेन शैत्यं तेनैव गजघटाभिघातद्योतनेन मान्द्यं च प्रतिपादितम्। वृत्त्यनुप्रासः शब्दालंकारः॥ ४३॥

**मनःप्रियमिह प्रभो मधुरसादरं सादरं**
**विधत्स्व हविरर्पयन्व्रतशुभावनां भावनाम्।**
**कुरुष्व च गुरुष्वघक्षपणदक्षिणां दक्षिणां**
**प्रयच्छति तवेप्सितं प्रणयपर्वतः पर्वतः॥ ४४॥**

**मनःप्रियमिति**। हे प्रभो। मधुरसादपि। मनसः प्रियम्। हविः उपहारम्। अरं शीघ्रम्। इह पर्वते। सादरम्। अर्पयन्सन्। व्रतशुभावनाम्। शुभं अवनं रक्षणं यया सा शुभावना। व्रतस्य पर्वतपूजालक्षणस्य शुभावनाम्। भावनां पर्वते भक्तिम्। विधत्स्व कुरुष्व। भक्तिः पूजासाद्गुण्यापादनेन रक्षतीति भावः। किंच, गुरुषु पूजादिप्रकारोपदेष्टृषु द्विजादिषु। अघक्षपणदक्षिणां पापनिरसनसमर्थाम्। दक्षिणां कुरुष्व। तेभ्यो दक्षिणां देहीत्यर्थः। एवं कृते कोऽर्थः स्यात्तत्राह—पर्वतः। प्रणयपर्वतः पूजापरिचयक्रमात्। पर्वशब्दात्तसिः। 'प्रणयः स्यात्परिचये याच्ञायां सौहृदेऽपि च' इति वैजयन्ती। तव ईप्सितं प्रयच्छति वितरति। पृथ्वीवृत्तमिदम्॥ ४४॥

गिरिभजनोदितप्रियविकासमये समये
जनितनभःप्रचारजलपत्रिदशैस्त्रिदशैः ।
सह यदि नः समेति हरिरप्रतिघप्रतिघः
प्रतिहतिमेतु दुष्टवधदोहलिना हलिना ॥ ४५ ॥

एवं कृते यदीन्द्रः प्रकुपितो हन्तुमागच्छेत्तदा कस्तस्य नियन्ता तत्राह—

**गिरीति** । गिरिभजनेन उदितस्य प्रियस्य प्रीतेर्विकासः समृद्धिः तन्मये तत्प्रचुरे समये, गिरिपूजानन्तरकाले । हरिः इन्द्रः । अप्रतिघप्रतिघः अप्रतिघातकोपः विषयविवेकं विना अस्मास्वपि सुलभकोपः सन् । 'प्रतिघौ रुट्प्रतीघातौ' इति यादवः । जनितनभःप्रचारजलपत्रिदशैः जनितनभःप्रचाराः इदंप्रथमतया संपन्नगगनप्रचाराः ये जलपत्रिणः शैशवादज्ञाः पत्रिणः तेषां दशेव दशा येषां तैः, शकुन्तशिशुवद्गगनचारमात्रेण विलक्षणैः वस्तुतो बललेशहीनैरिति भावः । त्रिदशैः देवैः सह । नः अस्मान् । यदि समेति । तदा । दुष्टवधदोहलिना दुष्टवधेष्वभिलाषवता । 'दोहलं दौहृदं छन्दः' इतीच्छापर्यायेष्वमरशेषः । हलिना बलदेवेन । प्रतिहतिमेतु ॥ ४५ ॥

प्रत्यक्षं गोत्रमासन्नं किमनादृत्य गोधनैः ।
अदृश्यो गोत्रभित्कश्चिद्गतः स्वर्गं गवेष्यते ॥ ४६ ॥

**प्रत्यक्षमिति** । गोधनैः गोपालैः कर्तृभिः । प्रत्यक्षं आसन्नं प्रत्यक्षत्वेऽप्यदूरस्थम् । गोत्रं पर्वतम् । अनादृत्य । अदृश्यः परोक्षः । स्वर्गं गतः स्वर्गरूपं दूरदेशं गतः । कश्चित् अप्रसिद्धः । गोत्रभित् इन्द्रः । किं

गवेष्यते किमिति पूजार्थमन्विष्यते। सनिकृष्टे परिदृश्यमाने च पूज्ये स्थिते तमतिक्रम्य अतादृशस्य कस्यचिदप्रसिद्धस्य पूजार्थं गवेषणमयुक्त-मिति भावः। गोत्रे स्वकुले पूज्ये स्थिते तमनादृत्य गोत्रभित्तद्विरोधी गवेष्यते इत्ययुक्तमिति गोत्रगोत्रभित्पदाभ्यां गम्यते ॥ ४६ ॥

**अहार्यो विविधैर्भोगैराकर्षन्विबुधानपि ।**
**अपरिच्छिन्नमूलोऽसौ ससारः सर्वदुःखकृत् ॥ ४७ ॥**

**अहार्य इति**। विविधैः भोगैः। विबुधानपि स्वर्गे महाभोगयुक्ता-न्देवानपि आकर्षन्। स्वर्गादप्यधिकभोगयुक्त इति भावः। अपरिच्छिन्न मूलं भूतलान्तःप्रविष्टो भागो यस्य सः। सारभूतैः रत्नादिभिः सहितः। अहार्यः पर्वतः। सर्वदुःखकृत् सर्वदुःखं कृन्तति च्छिनत्तीति तथोक्तः। कृती छेदन इति धातुः। एतदुपजीविनां किमपि दुःखं न भवतीत्यर्थः। ससार इत्यत्र ससार इति बिन्दुयोगेनार्थान्तर प्रतीयते। विविधै-र्भोगैरहार्यः भोगनिषेवणेऽपि 'न जातु कामः कामानाम्—' इति न्यायेन रागस्यैवाभिवृद्धेः तैरप्यनुच्छेदनीयः। विबुधान्प्राज्ञानप्याकर्षन्। अनादित्वादपरिच्छिन्नमूलः संसारः सर्वदुःखं करोतीति एवं प्रकृतार्थानुप-युक्तबिन्दुयोगेन पाठादिह बिन्दुमती शब्दालंकारः। इदं बिन्दुच्युतकं केचिद्व्यवहरन्ति ॥ ४७ ॥

**नन्द गोपप्रभो धर्मैर्व्रज वृद्धार्य सद्गतिम् ।**
**भज तामेव बुद्ध्वाद्रिं तनु त्राणे रतिं गवाम् ॥ ४८ ॥**

**नन्देति**। हे गोपप्रभो। धर्मैः। नन्द संतुष्टो भव। वृद्ध ज्ञानादिभिर-धिक। आर्य महाकुलीन। 'आर्यः कौलेयको जात्यः कुलीनः कुलजो हि

सः' इति यादवः । सद्गतिम् उत्तम शरण्यं व्रज । का सद्गतिस्तत्राह— भजेति । अद्रिमेव तां सद्गतिं बुद्ध्वा भज । गवां त्राणे । रतिम् अभिरतिम् । तनु कुरु । गवां त्राणं च गिरिप्रसादलभ्यमिति भावः । अत्र नन्दगोपेति व्रजवृद्धेति च एकसबोधनपरतया भजतामिति शत्रन्ततया तनुत्राणेति कवचपरतया च झटिति प्रतीतेः क्रियाचतुष्टयवञ्चिका प्रहेलिका । दुर्विज्ञानार्था प्रहेलिका नाम ॥ ४८ ॥

**नानाफलवनालीके नालीकेद्धामितोदके ।**
**तोदके च क्षुधामत्र धाम त्रस्तहितं विदुः ॥ ४९ ॥**

**नानेति** । नानाफला द्राक्षाखर्जूराद्यनेकविधफला वनानां आली पङ्क्तिर्यस्मिन् । 'नद्यृतश्च' इति कप्प्रत्ययः । नालीकैः पद्मैः इद्धं शोभमानम् अमितं बहु उदकं यस्मिन् । 'ञिइन्धी दीप्तौ' इति धातोः 'ञीतः क्तः' इति वर्तमाने क्तः । अत एव, क्षुधां तोदके नाशके । अत्र गिरौ । धाम स्थानमावासम् । त्रस्तहितं त्रस्तानां भीतानां हितं पथ्यम् । विदुः अवगच्छन्ति । वृद्धा इति शेषः । 'विदो लटो वा' इति लटो झेरुसादेशः ॥४९॥

**सहसा सह सार्थैर्मा तरसेतरसेवनम् ।**
**तनु तात नुताद्वज्री न गतो न गतोऽर्च्यताम् ॥ ५० ॥**

**सहसेति** । हे तात । सार्थैः संघैः बन्धुकुलैः सह । तरसा वेगेन बलेन वा । 'तरसी बलरंहसौ' इति यादवः । सहसा अतर्कितम् । इतरसेवनं मा तनु । हठादविचार्य नगव्यतिरिक्तपूजां माकुर्वित्यर्थः । वज्री इन्द्रः । नुतात् मया स्तुतात् । नगतः पर्वतात् तदपेक्षया । अर्च्यताम् । न गतः न प्राप्तः ॥ ५० ॥

**जुषतामिह धीः सूर्यसमा हि तव सुन्दरीम् ।**
**रक्षार्थमिह यक्षेण समाहितवसुं दरीम् ॥ ५१ ॥**

**जुषतामिति** । इह जगति । सूर्यसमा सूर्यवदखिलार्थप्रकाशनसमर्था । तव धीः । इह गिरौ । सुन्दरी मनोहराम् । गौरादित्वान्ङीष् । यक्षेण कुबेरेण । रक्षार्थं समाहितवसुम् इदमतिगुप्तस्थलमिति निक्षिप्तधनाम् । दरी गुहाम् । जुषतां सेवताम् । अत्र वासाय तव चित्तं रज्यत्वित्यर्थः । सूर्यसमा हीत्यत्र हिर्यमकनिर्वाहार्थं प्रयुक्तः प्रसिद्धिपरत्वेन योजनीयः ॥ ५१ ॥

**सभाजनं वदाम्येतद्गव्यैः सरसभाजनम् ।**
**सभाजनं गिरेरर्थ्यं स्ववृत्त्युल्लासभाजनम् ॥ ५२ ॥**

**सभाजनमिति** । सभायां स्थित जनम् । एतत् वक्ष्यमाणम् । वदामि । गव्यैः दधिक्षीरादिभिः । सरसानि सद्रवाणि भाजनानि भाण्डानि यस्मिंस्तथोक्तम् । स्ववृत्तेर्योगक्षेमरूपाया उल्लासस्य अभिवृद्धेः भाजनम् प्रापकम् । गिरेः सभाजनं प्रीणनम् । अर्थ्यं नन्द प्रति प्रार्थनीयम् ॥ ५२ ॥

**भवता भवतापघ्ने भाविते भाविते जसा ।**
**सुतरा सुतरामस्मिन्सुरभीः सुरभीश्वर ॥ ५३ ॥**

**भवतेति** । हे सुरभीणां गवामीश्वर । ‘आर्या गौर्माहेयी सुरभिर्बहुला च सौरभेयी च’ इति हलायुधः । भवतापघ्ने पुण्यक्षेत्रत्वात्संसारतापहरे । ‘अमनुष्यकर्तृके च’ इति टक् । ‘गमहनजन’ इत्यादिना उपधालोपः । ‘हो हन्तेः—’ इति कुत्वम् । अस्मिन्गिरौ । भवता । सुतरां भाविते पूजिते

सति । भाविना तत्प्रसादाद्भविष्यता तेजसा प्रभावेण पराक्रमेण वा । 'तेजो धाम्नि पराक्रमे' इति विश्वः । सुरादिन्द्रात् भीः । सुतरा सुखेन तरितुं शक्या ॥ ५३ ॥

**बहुविद्भ्यः समग्राहि समग्रा हि मतिस्त्वया ।**
**अतोऽन्यजनसंदिग्धे न संदिग्धे हिताहिते ॥ ५४ ॥**

**बहुविद्भ्य इति** । त्वया । बहुविद्भ्यः बहुश्रुतेभ्यः । समग्रा । मतिः । समग्राहि । सम्पूर्वाद्ग्रहेः कर्मणि लुङ् । हिरुक्तार्थप्रसिद्धिद्योतकः । अतः कारणात् । अन्यजनेन मन्दबुद्धिना इतरजनेन संदिग्धे संशयिते । हिताहिते इष्टानिष्टे । द्वंद्वैकवद्भावे सप्तमी । न सदिग्धे तव मतिः सदेह न भजति । मत्यैव सम्यगमुमर्थमालोचयेति भावः ॥ ५४ ॥

**गोवर्धनप्रकाशिन्या गोवर्धनसमाख्यया ।**
**समक्षेऽपि गिरेरस्य समक्षेपि क्षमा स्तुतिः ॥ ५५ ॥**

**गोवर्धनेति** । गोवर्धनप्रकाशिन्या गवां संवर्धनं, तत्प्रकाशिन्या । ताच्छीलिको णिनिः । गोवर्धनसमाख्यया गोवर्धन इति संज्ञया । अस्य गिरेः । समक्षेऽपि क्षमा देवतारूपत्वात्प्रत्यक्षेऽपि कर्तुमुचिता । स्तुतिः अस्माकमय रक्षक इति गुणकथा । समक्षेपि संक्षेपेण दर्शिता । संपूर्वा-त्क्षिपेः कर्मणि लुङ् ॥ ५५ ॥

**वयं धेनुशतैः सार्धमत्रासंकटकान्वयाः ।**
**अन्वभूम निराबाधमत्रासं कटकान्वयाः ॥ ५६ ॥**

**वयमिति** । वयम् । अत्र गिरौ । कटकान्वयाः कटके गिरिनितम्बे अन्वयः संबन्धो वासरूपो येषां तथाभूताः । असंकटकान्वयाः संकटर-

हितवंशाः । बहूनां वंश्यानामेकत्र वासेऽपि आवासवैपुल्यात्संबाधरहिताः सन्तः । धेनूनां शतैः सार्धम् । निराबाध वृष्ट्यातपादिबाधरहितं यथा तथा । अत्रासम् अभयम् । अन्वभूम । वर्षानिदाघयोरिति भावः । तथा चाभयदातृत्वेनाप्ययं पूज्य इत्याशयः ॥ ५६ ॥

**अनन्तमहिमा सोऽयं समस्तवसुधाधरः ।**
**मौलिमण्डनमस्येन्दुः समस्तव सुधाधरः ॥ ५७ ॥**

**अनन्तेति** । समस्तवसुधाधरः अखिलभूमण्डलधारकः । सोऽयं गिरिः । अनन्तमहिमा । किं च सुधाधरः अमृतधारकः । अत एव आह्लादकत्वात्, तव समः । इन्दुः । अस्य गिरेः । मौलिमण्डनम् । तथा उन्नतोऽयमित्यर्थः ॥ ५७ ॥

**तपोधनैरयं शैलो महाभाग महीयते ।**
**गोधनैरपि न त्वत्र महाभागम हीयते ॥ ५८ ॥**

**तपोधनैरिति** । हे महाभाग महान्भागो भाग्यमस्येति तथोक्तः । 'भागो भाग्ये रूपकार्थे चतुर्थांशैकदेशयोः' इति रत्नमाला । अयं शैलः । तपोधनैः महीयते पूज्यते । महिः कण्ड्वादिपठितः पूजार्थः । हे महाभागम महानामुत्सवानाम् आभायास्तेजसश्च आगम प्राप्य । आगम्यते आसाद्यते इत्यागमः । 'अकर्तरि च कारके—' इति कर्मण्यण्प्रत्ययः । 'मह उद्धव उत्सवः' इत्यमरः । अत्र पर्वते । गोधनैरपि । न तु हीयते नैव हीयते ॥ ५८ ॥

**रोधोरोधोज्झितैरेतैरुत्सैरुत्सेकतैरसौ ।**
**महीमहीनां तनुते ग्रावाग्रावाप्ततारकः ॥ ५९ ॥**

रोध इति । अग्रावासतारकः शिखरस्पृष्टनक्षत्रः । असौ । ग्रावा पर्वतः । 'ग्रावाणौ भूधरोपलौ' इति यादवः । रोधोरोधोज्झितैः कूलप्रतिबन्धरहितैः कूलंकषैः । उत्सैकतैः उद्गतसैकतैः । एतैः । उत्सैः प्रस्रवणजलैः । 'उत्सः प्रस्रवणं वारि' इत्यमरः । महीं भुवम् । अहीनां संपूर्णाम् । तनुते ॥

**धिषणातीत धिषणा लोकनीत्यास्तु लोकनी ।**
**सुधरेऽस्मिन्वसुधरे तात तेजस्वितातते ॥ ६० ॥**

धिषणातीतेति । हे धिषणातीत बुद्ध्या बृहस्पतिमतिक्रान्त । तात जनक । वसुधरे धनानां धारके । तेजस्वितया प्रभावत्तया तते विस्तीर्णे । अस्मिन् सुधरे उत्तमपर्वते विषये । धिषणा तव बुद्धिः । लोकनीत्या लोकन्यायेन । लोकनी लोकनकरणी । अस्तु । इमं लोकोत्तरबुद्धिवृत्त्या लोकयेत्यर्थः ॥ ६० ॥

**पादपादभ्रपर्यन्ता दीनादीनामसौ गतिः ।**
**गोप गोपनयोग्यास्मिन्कान्ता कान्तारभूरपि ॥६१॥**

पादपेति । हे गोप । अस्मिन्गिरौ । पादपादभ्रपर्यन्ता वृक्षबहुलपरिसरा । दीनादीनाम् अनाथप्रभृतीनामनुकम्प्यानाम् । गतिः शरण्यभूता । फलमूलादिना तेषां पोषणात् । कान्ता मनोहरा । असौ । कान्तारभूरपि वनभूरपि । 'कान्तारमुपसर्गादौ वने दुर्गमवर्त्मनि' इति विश्वः । गोपनयोग्या अस्माकं रक्षणे समर्थेत्यर्थः ॥ ६१ ॥

**इह पुष्पौघनिष्पन्नव्रजामोदे वने हिते ।**
**भृशमुत्सवसंतोषं व्रजामो देवनेहिते ॥ ६२ ॥**

इहेति । पुष्पौघनिष्पन्नव्रजामोदे स्वकीयपुष्पप्रकरसंपन्नगोकुलसौरभे ।

देवनस्य क्रीडायाः ईहिते, क्रीडार्थमीप्सिते इत्यर्थः । हिते गोसंवर्धनादिना अस्मदनुकूले। इह वने । भृशम् । उत्सवसंतोषं गिरिपूजोत्सवानन्दम् । व्रजामः प्राप्नुमः इति हेतोरिह स्थित्वा गिरिपूजां करिष्याम इत्यर्थः । वर्तमानसामीप्ये लट् ॥ ६२ ॥

**प्रयतस्व गिरेरस्य व्रजदेव सभाजने ।**
**खपुष्पकल्पे मा भक्तिं व्रज देवसभाजने ॥ ६३ ॥**

**प्रयतस्वेति** । हे व्रजदेव गोकुलराज । 'देवो राज्ञि सुरेऽम्बुदे' इति रत्नमाला । अस्य गिरेः । सभाजने प्रीणने । प्रयतस्व प्रवर्तस्व । खपुष्पकल्पे गगनकुसुमतुल्ये अकिंचित्करतया तन्निर्विशेषे । देवसभाजने सुरसभास्थिते इन्द्रादिजने । भक्तिं मा व्रज मा गाः । निषेधार्थकः केवलमाशब्दोऽयमिति तद्योगेन लोडुपपत्तिः ॥ ६३ ॥

**देवस्थानमिवेन्धानं परायणमवारितम् ।**
**गोवर्धनमवेह्येनं नारायणमिवागतम् ॥ ६४ ॥**

**देवस्थानमिति** । देवस्थानं स्वर्गमिव । इन्धानं दीप्यमानम् । अवारितं परायणं शरणार्थिनामनिवारितमाश्रयम् । 'त्रिषु स्यात्तत्परेऽभीष्टेऽप्याश्रयेऽपि परायणम्' इति कोशकाराः । एनं गोवर्धनम् । आगतं पूजाग्रहणाय स्वयमुपस्थितम् । नारायणमिव । अवेहि जानीहि । अयं बन्धश्चित्रेषु गोमूत्रिकाबन्धः । 'वर्णानामेकरूपत्वं यद्येकान्तरमर्धयोः । गोमूत्रिकेति तां प्राहुर्दुष्करं तद्विदो यथा' इति दण्डी । अस्यायं रचनाक्रमः । श्लोकस्य द्वे अर्धे पङ्क्तिद्वये विलिख्य प्रथमार्धाद्यक्षरं द्वितीयार्धद्वितीयाक्षरमित्यादिक्रमेण प्रथमार्धे अयुग्माक्षराणि द्वितीयार्धे युग्माक्षराणि च गृहीत्वा प्रथमार्धं वाचयेत् । एवं द्वितीयार्धाद्यक्षरं प्रथमार्धद्वितीयाक्षर-

मित्यादिक्रमेण द्वितीयार्धे अयुग्माक्षराणि प्रथमार्धे युग्माक्षराणि च गृहीत्वा द्वितीयार्धं वाचयेत् । एवं सति प्रथमार्धरूपतया द्वितीयार्धरूपतया च वाच्यमानलिपिविन्यासो गोमूत्ररेखावदनृजुरूप एव भवति । अतोऽयं गोमूत्रिकाबन्धः । अत्र बन्धानुरोधादवेहीति गुणयुक्तः पाठः । न च 'एत्येधत्यूठ्सु' इति वृद्धिप्रसक्तिः । अनेजादित्वात् । न चाङुपश्लेषेण एजादित्वेऽपि वृद्धिः । तदा 'ओमाङोश्च' इति पररूपत्वस्यैव प्राप्तेः । अतो वृद्धियुक्तः पाठः प्रामादिकः । उक्त च वामनेन 'अवेहीति वृद्धिरवद्या' इति ॥ ६४ ॥

**मोघाशो मघवान्देवः स्यादत्रत्यस्य सादने ।**
**मेघानामपि वा भावः सादमेत्यद्रिसादने ॥ ६५ ॥**

**मोघाश इति** । मघवान् देवः इन्द्रः । अत्रत्यस्य अत्र वसतो जनस्य । 'अव्ययात्त्यप्' इत्यत्रशब्दाच्छैषिकस्त्यप्प्रत्ययः । सादने हिंसने मारणे । 'मारणे मृतसस्कारे गतौ द्रव्येऽर्थदापने । निर्वर्तनोपकरणानुव्रज्यासु च सादनम्' इत्यमरः । मोघाशः स्यात् निष्फलाशो भवेत् । ननु मेघानां प्रेरणेन महावृष्ट्या गोकुलं बाधेतेत्यत आह— **मेघानामिति** । मेघानां भावः उदयोऽपि । अद्रिसादने अस्माकमद्रिप्राप्तौ सत्याम् । सादम् एति अवसादं प्राप्नोति । वाकारोऽत्र विकल्पे । यदीन्द्रो हन्तुमागच्छेद्यदि वा मेघाः प्रादुर्भवेयुः; उभयमपि व्यर्थीभवेदित्यर्थः । अयमपि गोमूत्रिकाबन्धः ॥ ६५ ॥

**अचञ्चलाङ्गसत्ताकश्चलाचलघनाततः ।**
**अचलः कस्य नाकल्यः साध्यानन्दस्य सिद्धिकृत् ॥**

**अचञ्चलेति** । अचञ्चला स्थिरा अङ्गानां सत्ता सद्भावो यस्येति

तथोक्तः। 'शेषाद्विभाषा' इति कप्। चलाचलैः चञ्चलैः घनैः मेघैः आततः। 'चलं लोलं चलाचलम्' इत्यमरः। साध्यानन्दस्य सिद्धिकृत् देवगणविशेषाणामानन्दस्य संपादकः, विहारभूमित्वात्। यद्वा अन्यत्र यत्नेन साधनीयानन्दस्य यत्नं विना सिद्धिकृत्सर्वभोग्यद्रव्यसमृद्धः। अचलः। कस्य। न आकल्यः नाकलनीयः पूजनीयो न भवति। सर्वस्यापि पुजनीय इत्यर्थः। अयं स्थानचित्रेषु त्रिस्थानश्लोकः कण्ठतालुदन्तरूपस्थानत्रयमात्रभववर्णारब्धः॥ ६६॥

**अगः सनग आसन्नः सालताललताततः।**
**सततं संहतघनः संगतानन्दसाधकः॥ ६७॥**

**अग इति**। सनगः पर्यन्तपर्वतसहितः। आसन्नः अस्मन्निवाससन्निकृष्टः। सालास्तालाश्च वृक्षविशेषाः, लता वल्ल्यः, ताभिः आततः। सततं संहतघनः औन्नत्यात्संश्लिष्टमेघः। अगः। संगतानां आनन्दस्य साधकः। अयं द्विस्थानश्लोकः॥ ६७॥

**अहहाङ्ग खगङ्गाकगाहकाङ्गाङ्कगागकः।**
**अघाकागाङ्ककागाङ्कगाङ्कागखगाङ्ककः॥ ६८॥**

**अहहेति**। अहहेत्याश्चर्ये। 'अहहाद्भुतखेदयोः' इति यादवः। अङ्गेत्यामन्त्रणे। खगङ्गाकगाहकाङ्गाङ्कगागकः खगङ्गायाः आकाशगङ्गायाः आकः प्रवाहः तस्मिन् गाहकानाम् अवगाहनं कुर्वतां देवानाम् अङ्गानि तेषाम् अङ्कान् लाञ्छनानि वस्त्राभरणानि गताः प्राप्ताः अङ्कगाः। गमेर्डः। तथाभूताः अगा वृक्षा यस्मिन्स तथोक्तः। समासान्तः कप्। अघाकागाङ्ककागाङ्कगाङ्कागखगाङ्ककः अघं पापं तत्फलम् अकं दुःखं च तदुभयमेव अगाङ्कं वृक्षावयवः तस्य, कागः कं शिर आगच्छतीति कागः

अङ्कः चिह्नं यस्य स तथोक्तः । शिरसि विसर्पणशीलधूमवान् धूमध्वज इति यावत् । एतावता पापदुःखेन्धनाग्निरिति गाङ्गकस्य विशेषणं प्राप्तम् । तस्मिन् गाङ्गके गङ्गासंबन्धिनि जले अगन्ति विहरन्तीत्यगाः । 'अग कल्याणविहारयोः' इति धातोः पचाद्यच् । ते च ते खगाश्च तेषां अङ्गकः प्राप्ता 'अगि गतौ' इति धातोर्ण्वुल् । आकाशगङ्गायां विहरमाणान् पक्षिणः प्राप्त इत्यर्थः । एवं विशेषणद्वयेनापि पर्वतस्यात्यौन्नत्यमुक्तम् । एवं क्वचिन्मूलकोश एव व्याख्यानं दृष्टम् । अस्य श्लोकस्य पाठशुद्धेरत्यन्तदुर्निश्चयतया श्रोतॄणामनुग्रहाय प्रायः कविनैव व्याख्यातम् । तत्र 'अग कल्याणविहारयोः' इति धातुः प्रसिद्धधातुपाठतद्वृत्त्यादिषु न दृष्टः । तथापि शिष्टव्यवहारादादरणीयः । विधान्तरेणापि विशेषणद्वयं वयं व्याचक्ष्महे । खगङ्गाके आकाशगङ्गाजले गाहकानां देवानाम् अङ्गम् अन्तिकम् अङ्कते गच्छतीत्यङ्गाङ्कम् । 'अङ्गं गात्रान्तिकोपायप्रतीकेष्वप्रधानके । देशभेदे तु पुंसि स्यादङ्गेत्यामन्त्रणेऽव्ययम्' इति रत्नमाला । 'अकि गतौ' इति धातोः कर्मण्यण् । तथाभूतं गं गानं येषाम् । गायतेर्घञर्थे कः । तथाभूताः अगाः वृक्षाः यस्मिन्स तथोक्तः । समासान्तः कप्, स्वार्थे कनिति वा । अनेन कल्पवृक्षप्रचुरे मन्दाकिनीतटेऽपि एतद्गिरितरूणां सौभाग्यं गायन्तीति कल्पवृक्षेभ्योऽप्येषामतिशयो व्यज्यते । अघस्य आकः प्रवाह एव अगस्य पर्वतस्य अङ्गमेकदेश इति वा अगा वृक्षा अङ्गमस्येति वा अगाङ्गं वनम्, तस्य कागाङ्कः के वायौ अगति कुटिलं गच्छति इति कागः । 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः' इत्यमरः । 'अग कुटिलायां गतौ' इति धातोः पचाद्यच् । तथाभूतः अङ्कः चिह्नं अस्येति तथोक्तः वायुसाहित्यात्कुटिलविसर्पिधूमो धूमध्वज इत्यर्थः । एतावता पापसंचयवनस्य वायुसहितो वह्निरिति विशेषणं प्राप्तम् । तथाभूता गा उक्तिः । 'वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रियाक्रमे । नाश-

यत्याशु पापानि महापातकजान्यपि ' इति स्मरणात् । गा इति गयातेः संपदादिक्विप् । यद्यपि तस्य गाने प्रसिद्धिः, तथापि 'गै शब्दे' इति सामान्येनानुशासनात् ' संभवैतिह्ययुक्तानि तानि पौराणिका जगुः ' ' गीतश्चायमर्थोऽङ्गिरसा ' इत्यादिप्रयोगदर्शनाच्च उक्तिमात्रमपि तदर्थः । ' ग गीते गा च गाथायां गो गन्धर्वगणेशयोः ' इति रत्नमाला । सा अङ्ग गात्र-यस्य सः त्रयीतनुः सूर्यः तस्य के शिरसि आगच्छतीति कागः खगः वायुः ज्योतिश्चक्रं भ्रमयन्सप्तमस्कन्धः प्रवहानिलः । 'पक्ष्यर्केष्वनिलाः खगाः' इति यादवः । तस्य अङ्कः प्राप्ता तावत्पर्यन्तमुन्नत इत्यर्थः । अथवा विधान्तरेण श्लोको व्याख्यायते । अहहाङ्कख अं विष्णु जिहते प्रपद्यन्ते ये तान्घ्नन्ति ये तेषामङ्ग शिरःप्रभृति खायति हिनस्तीति नन्दसबोधनम् । 'ओहाङ् गतौ ' ' आतोऽनुपसर्गे कः ।' हन्तिधातोः क्विप् । ' खै कदने ' इति धातोरपि कः । कदन हिंसा । गङ्गाया आकस्य प्रवाहस्य गां गतिम् । ' गाङ् गतौ ' इति धातोः संपदादिक्विप् । जिहीते प्रपद्यत इति गङ्गाकगाहम् । तथाभूत काङ्गं शिरोरूपमङ्गं शिखरम् , तदेवाङ्कः चिह्नं गच्छति भजतीति अङ्कगः, तादृक् अगो हिमवान् , त किरति क्षिपति माहात्म्येन तिरस्करोतीति तथोक्तः । किरतेर्विंचि गुणे च रेफान्तम् । इदं पर्वतविशेषणम् । अघाकागाङ्गकेत्यपि संबोधनम् । अघस्य अकागः अकरणम् । ' कगे नोच्यते ' इति धातोः घञ् । नञ्समासः । नोच्यते अस्यायमर्थ इति न कथ्यते, क्रियासामान्यमर्थ इति व्याख्यातम् । तस्मिन् अङ्गमुपायं कायति वदतीति । 'कै शब्दे' इति धातोः कः । अगाङ्कगाङ्गकागेत्यपि संबोधनम् । अगाः गतिरहिताः पापिनः, तानप्यङ्कयति गतिं प्रापयतीत्यगाङ्का गाः गानमुक्तिर्वा यस्य तस्य भगवतः अङ्गमन्तिकमेवाङ्कमागच्छतीति तथोक्तः, भगवत्सेवापरेत्यर्थः । खगाङ्कः खगमभ्रंलिहमङ्गमस्येति तथोक्तः । इदमपि पर्वत-

विशेषणम् । व्याख्यात्रयेण पर्वतविशेषणानामुत्तरश्लोकेन संबन्धः । अयमेकस्थानश्लोकः कण्ठ्यमात्रारब्धः ॥ ६८ ॥

**रजतगैरिकरत्नगणैरयं**
**कनति कान्तलताञ्चितकाननः ।**
**त्रिजगदेकनिधानतयाधिक-**
**स्त्रिदशराजधराधरतल्लजात् ॥ ६९ ॥**

**रजतेति** । कान्ताभिः लताभिः अञ्चितं पूजितं काननं यस्य सः । त्रिजगदेकनिधानतया जगत्त्रयस्याप्येकावासभूमितया । त्रिदशराजधराधरतल्लजात् इन्द्राद्यधिष्ठितात्पर्वतश्रेष्ठात्सुमेरोरपि । अधिकः । द्युलोकजनमात्रनिवासाज्जगत्त्रयनिवासोऽतिरिच्यत इति भावः । 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि' इत्यमरः । अयं गिरिः रजतगैरिकरत्नगणैः रूप्यसुवर्णमणिनिकरैः । 'सुवर्णेऽपि च गैरिकम्' इत्यमरः । कनति दीप्यते । निरोष्ठ्योऽयं श्लोकः ओष्ठ्यं विना स्थानचतुष्टयप्रभववर्णारब्धः ॥ ६९ ॥

**सहेत पर्वतोऽयं वो गोप्तुं क्वचन कन्दरे ।**
**अदरिद्रा वसामोऽत्र सर्वहेतोरिवोदरे ॥ ७० ॥**

**सहेतेति** । अयं पर्वतः । क्वचन कन्दरे यत्र क्वाप्येकस्यामेव गुहायाम् । वः सर्वानपि युष्मान् । गोप्तुं रक्षितुम् । सहेत शक्तो भवेदित्यर्थः । अत एव, सर्वहेतोः जगज्जनकस्य महापुरुषस्य । उदर इव अत्र पर्वते । अदरिद्राः अवकाशादिषु दारिद्र्यरहिताः । वसामः । अत्र चतुर्थपादाक्षराणां पादत्रयेऽपि तत्र तत्र प्रवेशाद्गूढचतुर्थो नाम गूढचित्रेषु शब्दालङ्कारः ॥

**घनाघना घनाघनाद्भुतेह शाखिसंततिः ।**
**वनावनावनावनानुरूपसत्फलावृता ॥ ७१ ॥**

**घनेति** । इह पर्वते । वनावनौ काननभूमौ । घना निरन्तरा । अघना काठिन्यरहिता कोमला । घनाघनाद्भुता वर्षुकाम्बुदवदाश्चर्यभूता तद्वच्छ्यामला । शाखिसंततिः वृक्षपङ्क्तिः । अनावनानुरूपसत्फलावृता अनानां प्राणिनामवने रक्षणे अनुरूपैः सत्फलैः उत्तमफलैः आवृता सर्वत्र परीता । 'घनाः कठिनसंघातमेघकाठिन्यमुद्गराः' 'घनाघनो मत्तगजे वासवे वर्षुकाम्बुदे' इति च यादवः । **प्रमाणिकावृत्तमिदम्** ॥ ७१ ॥

**वृतेह भाति हेमभूर्नमेरुणा समन्ततः ।**
**प्रतीहि नैनमद्भुतं न मेरुणा समं ततः ॥ ७२ ॥**

**वृतेति** । इह पर्वते । समन्ततः परितः । नमेरुणा वृक्षविशेषेण । वृता । 'छायातरुर्नमेरुः स्यात्' इति शब्दार्णवः । हेमभूः काञ्चनभूमिः । भाति । ततः काञ्चनमयत्वाद्धेतोः । अद्भुतम् । एनं पर्वतम् । मेरुणा समम् । न न प्रतीहि जानीह्येवेत्यर्थः ॥ ७२ ॥

**इह प्रभूतवाहिनीवने वने वने वने ।**
**फलेन भूयते स्वयं नतेन तेन तेन ते ॥ ७३ ॥**

**इहेति** । इह पर्वते । प्रभूतवाहिनीवने प्रचुरनदीजले । वने उज्ज्वले । 'वन याचने च' इति धातुः, चकारात्प्रकृतदीप्त्यर्थोऽपि । ततः पचाद्यच् । वने वने कानने कानने वीप्सायां द्विर्भावः । ते तव । तेन तेन अभीप्सितेन । फलेन । स्वयं नतेन स्वयमुपगतेन । भूयते प्रतिवनं त्वदभीप्सितानि सर्वाणि फलानि स्वयमेव लभ्यन्त इत्यर्थः ॥ ७३ ॥

**अहार्यमेतिचेतनासितासितानराज ते ।**
**अहार्यमेति चेतना सितासिता न राजते ॥ ७४ ॥**

**अहार्येति** । अहार्या हर्तुमशक्या मा लक्ष्मीर्यस्येति नन्दसबोधनम् । इतिचेतनासितासितानराजेत्यपि सबोधनम् । चेतनो धीमान् । चेतनशब्दस्य प्रसिद्धिः इतिचेतनम् । 'अव्ययं विभक्ति' इत्यादिना शब्दप्रादुर्भावे अव्ययीभावः । तत्रासितु स्थातु शीलमेषामिति तथोक्ताः चेतनशब्दप्रसिद्धिशालिनः, तेषां भावः इतिचेतनासिता । त्रया असिताः विराजिताः । 'अस गतिदीप्त्यादानेषु' इति धातोर्दीप्त्यर्थे कर्तरि क्तः । अनाः प्राणिनः तेषा राजा श्रेष्ठः तस्य सबोधनम्, धीमत्त्वेन प्रसिद्धाना जनानां प्रवरेत्यर्थः । ते तव । चेतना बुद्धिः । सिता च असिता च सितासिता । 'वर्णो वर्णेन' इति समासः । अत्र सितासितेत्युपचारात्कोटिद्वयावलम्बनतयोभयरूपा सदिहानोच्यते । तथाभूता सती । अहार्यं पर्वतम् । एति प्राप्नोति । पर्वतः पूजनीयो न वेति सदेहेन तं गोचरयति न तु पूजनीय एवेति निश्चयेनेत्यर्थः । अत एव न राजते तव बुद्धिमत्ताप्रसिद्ध्यनुगुणेन पूज्ये पूज्यत्वनिश्चयेन रहिततया त्वद्बुद्धिर्न शोभत इत्यर्थः । अर्धयोरैकरूप्यादर्धयमकम् ॥ ७४ ॥

**समग्रगुणभूमासौ सानुमानागमानितः ।**
**समाहितधियां सेव्यः सानुमानागमानितः ॥ ७५ ॥**

**समग्रेति** । समग्रगुणभूमा पुष्कलस्थैर्यौन्नत्यादिगुणप्रचयः । सानुमानागमानितः सानवः पर्वतानां समभागाः, 'सानुः समा गिरेः क्षितिः' इति कोशकाराः । सानुप्रमाणाः सानुसमानविस्तारयुक्ताः अगा वृक्षाः तैर्हेतुभिः मानितः पूजितः । यद्वा सानवः शृङ्गाणि तत्प्रमाणैः तद्वदुन्नतैः अगैर्मानितः । 'सानुः शृङ्गे शैलमार्गे' इति विश्वः । समाहितधियां सेव्यः

योगाभ्यासायाश्रयणीयः । असौ सानुमान् गिरिः । आगमान् पुराणादीन् । इतः प्राप्तः, पुराणप्रसिद्धोऽयं महामहिमा गिरिरित्यर्थः । अत्र विशेषणसाम्याद्गिरेर्भगवद्रूपत्व प्रतीयते । समग्रगुणभूमा पूर्णषाड्गुण्यशाली । अनुमानसहितेन आगमेन अनितः अप्राप्तः अनुमानागमाभ्या परिच्छेत्तुमशक्यः । समाहितधियां सेव्यः उपास्यः, आगमानितः आगाते प्रपद्यन्त इत्यागाः प्रपन्नाः । आङ्पूर्वात् 'गाङ् गतौ' इति धातोः 'आतश्चोपसर्गे' इति कः । तैर्यथावन्मानितः ज्ञापितः उपदिष्टः । 'मान ज्ञाने' इति धातोर्निष्ठा । एवं विशेषणानामप्रस्तुतसाम्यात्**समासोक्ति**रलंकारः ॥

**याचले जरसानेता ताने सारजले चया ।**
**कालिमानवसायामा माया सा वनमालिका ॥७६॥**

**येति** । ताने उपकारके । 'तनु श्रद्धोपकरणयोः' इति चौरादिकाद्धातोः पचाद्यच् । सारजले उत्तमजलशालिनि । अचले । या । जरसा जरया । अनेता अप्राप्ता । चया उपायवती । चयशब्दादर्शआद्यच् । कालिम्ना तरुनीरन्ध्रताप्रयुक्तमोनीलिम्ना अनवसायः अवसायरहितः अविज्ञेयः आमः मार्गः अस्यामिति तथोक्ता । अम्यते गम्यतेऽस्मिन्नित्यामो मार्गः । 'अम गत्यादिषु' इति धातोरधिकरणे घञ् । एवंभूता सा वनमालिका वनराजिः । माया मायावदाश्चर्यभूता । इतोऽर्थान्तरमपि प्रतीयते । अचले स्थिरे न तु प्रतिमन्वन्तरभिन्नेन्द्रादिवदस्थिरे । तानयति विस्तारयति प्रपञ्चमिति ताने जगत्कर्तरि । सारजले अरैर्नाभिमध्यगतावयवैः सहितं सारं चक्रम्, सार जलं तज्जं शङ्खम् । सारपदं तन्त्रेणोक्त द्रष्टव्यम् । 'न्याय्ये च नीरे च धने च सारम्' इति विश्वः । तदुभयं लात्यादत्त इति सारजले विष्णौ । 'ला आदाने' इति धातोः कः । या अचया अनपायिनी । चयतेर्गत्यर्थात्पचाद्यच् । नञ्समासः । जरसा

अनेता नित्या अम्लाना च । कालिमानवसायामा काः शब्दायमानाः, 'कै गै शब्दे' कर्तरि क्विप् । अलयो भ्रमराः तेषां मानः स्तब्धता कालिमानः । तस्य वसः स्तम्भकः आयामो वैपुल्यमस्या इति तथोक्तः । 'वसु स्तम्भे' पचाद्यच् । पुष्पभ्रश मधु पीत्वा तृप्त्या तेभ्य उत्पत्य झङ्कुर्वतां भ्रमराणां पुष्पान्तरेष्वनादरलक्षणां स्तब्धतां सौरभातिशयेन अपनीय स्वस्मिन्नावर्जयिता परिणाहोऽस्या इत्यर्थः । तथाभूता सा वनमालिका वैजयन्ती । माया भगवन्मायारूपा, 'स्वां मायां वनमालाख्यां नानागुणमयीं दधत्' इति पुराणवचनादिति । एवं प्रतीयमानाप्रस्तुतार्थेन प्रस्तुतार्थस्यौपम्यकल्पनाच्छब्दशक्तिमूलोऽलंकारध्वनिः । इदं पादानुलोमप्रतिलोमं **गतिचित्राख्यचित्रालंकारभेदः** । अर्धद्वयेऽपि प्रथमपादस्यानुलोमवर्णानां द्वितीयपादे प्रातिलोम्येन निवेशात् ॥ ७६ ॥

**अभ्रान्तमतिशय्येह विराजिततमागमे ।**
**निशामयालीनघनं सालौघमतिनन्दनम् ॥ ७७ ॥**

**अभ्रान्तमति शय्येहविराजि ततमागमे ।**
**निशामयालीनघनं सारौघमतिनन्दनम् ॥ ७७ ॥**

**अभ्रान्तमिति** । अभ्रान्तम् अभ्रसमीपम् । 'अन्तोऽध्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके' इति यादवः । अतिशय्य अतिक्रम्य । विराजिततमाः अतिशयेन विराजिताः अगमाः वृक्षाः यस्मिन्, अभ्रकषवृक्षबृन्दे । इह पर्वते । आलीनघनं सलग्नमेघम् । अतिनन्दनं नन्दनातिशायिनम् । सालानां वृक्षविशेषाणाम् ओघ बृन्दम् । निशामय पश्य । किं च । हे ततम स्फीतलक्ष्मीक । शय्येहविराजि शय्यामीहन्ते निवाससौख्यान्निद्रामिच्छन्तीति शय्येहाः । कर्मण्यण् । तथाभूतैः विभिः पक्षिभिः राजत इति

तथोक्तः। राजतेः कर्तरि क्विप्। तस्मिन्, अगमे पर्वते। अलीनघनम् अलीनाः भ्रमरश्रेष्ठाः तैः कमलादिलुब्धैः सान्द्रम्। अतिनन्दनम् अत्यर्थतोषणम्। सालौघ रलयोरभेदात् साराणां जलानां प्रवाहम्। अभ्रान्तमति अचञ्चलमति एकाग्रचित्त यथा तथा। निशामय। इतीयमेकक्रियान्वितश्लोकावृत्तिः। क्रियापदव्यतिरेकेण श्लोकस्यार्थान्तरसिद्ध्यर्थमावर्तनात्॥

**चारुचीरीरुचा रोची रुरुचारैरचर्चरुः।**
**चिरोच्चरोचिरचरो रुचिरो रुचिराचरः॥ ७८॥**

**चार्विति**। चारूणां मनोज्ञानां चीरीणां झल्लिकाख्यानां पक्षिविशेषाणा रुचा कान्त्या। रोची रोचमानः। आवश्यकार्थे णिनिः। रुरुचारैः रुरवो मृगविशेषाः। 'रुरुर्महान्कृष्णसारः' इति यादवः। तेषां संचारैरुपलक्षितः। अचर्चरुः न विद्यते चर्चेभ्यो हिंस्रेभ्यो रुः भयं यस्मिन् स तथोक्तः। 'चर्च परिभाषणहिंसादानेषु' इति धातोः पचाद्यच्। 'रुः शब्दे ना भये युद्धे' इति रत्नमाला। चिरोच्चरोचिः चिरं सदा उच्चानि रोचींषि रत्नत्विषो यस्मिन्स तथोक्तः। अचरः अचल इति विशेष्यनिर्देशः। रलयोरभेदात्। रुचिरः सुन्दरः। रुचिराचरः रुचिं कान्तिं रान्ति ददतीति रुचिराः आश्रयस्य शोभाकराः अचराः स्थावराः वृक्षादयो यस्मिन्। 'रा दाने' इति धातोः कः। एवंभूतोऽयमचल इत्यर्थः। द्व्यक्षरोऽय वर्णचित्रभेदः। अदन्त्यस्थानचित्रभेदश्च॥ ७८॥

**नीतिनेत्र नतानन्त नितान्तोन्नततानतः।**
**तातेतोऽतनुतोऽनीतं न नुन्नैनोनुतान्ततः॥ ७९॥**

**नीतीति**। नीतिनेत्र, नतानन्त, तात, इति संबोधनानि। नीतिः नीतिशास्त्रं नेत्रमस्येति, नतो नमस्कृतोऽनन्तो विष्णुरनेनेति च तथोक्तः।

नितान्तोन्नततानतः नितान्तमत्यर्थमुन्नतः तानो विस्तारः सानुप्रदेशो यस्य तस्मात् । अतनुतः महतः । नुत्तैनोनुतान्ततः नुत्तैनोभिः निरस्तपापैः महद्भिः नुताः स्तुताः महर्षयः तैरान्ततः गतात् प्राप्तादित्यर्थः । 'अम गत्यादिषु' इति धातोः कर्मणि क्ते 'रुष्यमत्वरसंघुषास्वनाम्' इति विकल्पादिडागमाभावे 'अनुनासिकस्य क्विझलोः' इति दीर्घे सति 'आन्त' इति रूपम् । इतः अस्मादचलात् । अनीत न अप्राप्तं नास्ति । 'ई गतौ' इति धातुः । अस्माभिरित एव सर्वमपेक्षित प्राप्तमित्यर्थः । अनीतमित्यत्र । अतीतमिति पाठे अत्यर्थम् ई कान्तिः । 'ई गतिव्याप्तिप्रजनकान्त्यसनखादनेषु' इति धातुः । सपदादिक्विप् । तया इत प्राप्तं नास्ति । इतोऽधिकं शोभायुक्तं वस्तु नास्तीत्यर्थः । सर्वत्र त्र्यक्षरेऽस्मिन् 'नीतिनेत्र' इति रेफोऽपि दृश्यते । अतः 'नीतिनेतृनत' इति ऋकारयुक्तः पाठो युक्तः । तदा नीतिनेतृनतेत्येकं सबोधनम् । नीतेर्नेतारः तत्प्रमेयनिश्चायकाः । 'ज्ञानभृतिविगणनव्ययेषु नियः' इत्यात्मनेपदविधानान्नयतेर्ज्ञानार्थता । तैः नत नमस्कृतेत्यर्थः । अनन्तनितान्तोन्नततानतः इत्येकं पदम् । तत्र आनन्त्यमवसानराहित्यमतिविशालत्वं तानस्य विशेषणम् ॥ ७९ ॥

**सराससारसासारैः सूरोस्रसरुसारसैः ।**
**रसस्रुः सरसस्रंसैः सरःसाररसैरसौ ॥ ८० ॥**

**सरासेति** । असौ गिरिः । सरासंसारसासारैः सरासः रासेन शब्देन सहितः सारसानां पक्षिविशेषाणाम् आसारः प्रसरणं येषां तैः । सूरोस्रसरुसारसैः सूरोस्रैः सूर्यकिरणैर्हेतुभिः सरुः दर्पो विकासरूपः येषां तथाभूतानि सारसानि पद्मानि येषु । 'सरुर्दन्ते हरे दर्पे' इति विश्वः । अथवा सूरोस्रैर्हेतुभिः सरूणि सशब्दानि विकसनात्सभृङ्गनादानि सारसानि येष्विति व्याख्येयम् । सरसस्रंसैः माधुर्यस्यन्दसहितैः । सरःसाररसैः

सरःश्रेष्ठजलैः। रससूः रागजनकः, जनानां रुच्युत्पादक इत्यर्थः ॥ ८० ॥

**धीर धीरधुराधारी धाराधरधरोऽधरे ।**
**रोधोधरारोधरोधिधाराधारो धराधरः ॥ ८१ ॥**

**धीरेति** । हे धीर विद्वज्जन । धीरधुराधारी धीराणां कुङ्कुमवृक्षाणां धुर भारं धारयतीति तथोक्तः । 'धैर्यवत्स्वैरिविद्वत्सु धीरः क्लीब तु कुङ्कुमे' इति रुद्रः । धूर्शब्दादप्रत्ययः समासान्तः । अधरे अधःप्रदेशे नितम्बभागे। धाराधरधरः मेघानां धारकः तथोन्नतः । रोधोधरारोधरोधिधाराधारः रोधोधरायाः कूलभूमेः अरोधरोधिनी निर्निमित्तं कूलभूमिमाक्रामन्ती या धारा निर्झरजलसततिः तस्या आधारः । एवभूतो धराधरः पर्वतः ॥ ८१ ॥

**भूभृन्निभेभभानेनानेन भूनाभिनेनभ ।**
**भानुभानुभभाभिन्नं नुन्नं नूनं न नो नभः ॥ ८२ ॥**

**भूभृदिति** । हे इनभ सूर्यप्रभासदृशप्रभ । भूभृन्निभेभभानेन भूभृन्निभानां पर्वतसदृशानाम् इभानां गजानां प्रकाशस्थानेन । भातेरधिकरणार्थे ल्युट् । भूनाभिना भुवि प्रधानभूतेन । 'नाभिः प्रधाने कस्तूरिमदे च क्वचिदीरितः' इति विश्वः । अनेन गिरिणा कर्त्रा । भानुभानुभभाभिन्नं भानुभानुभिः आदित्यकिरणैः भभाभिः नक्षत्रभाभिश्च भिन्नं सपृक्तम् 'भिन्नमन्यार्थवचने संपृक्ते दारिते स्फुटे' इति विश्वः । नभः आकाशम् । नूनम् असंशयम् । न नो नुन्न नुन्नमेव । अभ्रकषोऽयमित्यर्थः । 'तर्कनिश्चययोर्नूनम्' इति यादवः ॥ ८२ ॥

**तत्र तत्रातितारेऽत्र तारातीततरूत्तरे ।**
**तरेत्तातारतीरेताताते त्रातरि ते रतिः ॥ ८३ ॥**

**तत्र तत्रेति** । हे तात नन्द । तत्र तत्र प्रदेशे । अतितारे अत्यर्थः तारः सिंहाद्युच्चस्वरः शुद्धमौक्तिकं वा यस्मिंस्तस्मिन् । 'तारोऽत्युच्चस्वरे मुक्ताशुद्धौ निर्मलमौक्तिके' इति रत्नमाला । तारातीततरूत्तरे नक्षत्रातीतास्तरुश्रेष्ठा यस्मिंस्तस्मिन् । 'उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः स्यात्' इत्यमरः । एताततै एतैः शरणार्थितया समागतैः आतते व्याप्ते । त्रातरि । अत्र गिरौ । ते तव । रतिः इच्छा । अरतीः अस्वरसान् । तरेत् अभिभवेत् । 'तॄ तारेऽभिभवेऽपि स्यात्' इति कविकल्पद्रुमकारः । एवंभूतोऽयं पर्वत इति सर्वविधापि तव विचिकित्सा गच्छत्वित्यर्थः ॥ ८३ ॥

**विततीताव्रतिव्रते वीतातीताव्रताव्रतौ ।**
**तातावातातिवृत्तेऽति वातोऽतीवाततेऽवति ॥ ८४ ॥**

**विततीति** । हे तात । विततीताव्रतिव्रते, विततिः पक्षिपङ्क्तिः तया इता प्राप्ता आव्रतिः परितः स्थिता वृक्षवाटिका तया वृते परीते । वीतातीतौ वीताः सगताः प्राप्ताः आतयः पक्षिविशेषाः याभिस्ताः वीतातयः । वीधातुरदादिषु गत्यर्थः । 'शरारिरातिराटिश्च' इत्यमरः । तथाभूताः ईतयः प्रवाहाः अस्मिन्निति तथोक्तः । 'ईतिः प्रवाहे सिंहे च' इति विश्वः । अवातातिवृत्ते, वातयन्तीति वाता विषयाः । 'वात सुखसेवनयोः' इति धातुः । तानतन्ति सततं गच्छन्तीति वातातिनो विषयपराः । 'अत सातत्यगमने' इति धातुः । ततोऽन्ये अवातातिनो वीतरागाः तैर्वृत्ते आवासत्वेन स्वीकृते । 'वृत शरणे' इति धातुः । अतीव अत्यर्थम् । आतते विस्तृते । एवंभूतेऽस्मिन्पर्वते इति शेषः । ऋताव्रतौ सर्वेष्वपि ऋतुषु । वातः । अति अत्यर्थम् । अवति रक्षति । सर्वेष्वपि ऋतुषु प्राणिनां हित एवात्र वायुः । असह्यवायुः कदापि नास्तीत्यर्थः । 'बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे' इत्यमरः ॥ ८४ ॥

नुन्नैनसां निनंसूनां सानूनासनसानुना ।
सानसां नः ससेनानां सानेनासन्नसूः सनिः ॥८५॥

**नुन्नैनसामिति** । नुन्नैनसां निरस्तपापानाम् । निनंसूनां नन्तु गिरिं प्रणन्तुमिच्छूनाम् । सानसाम् अनोभिः शकटैः सहितानाम् । ससेनानां सेनासहितानाम् । नः अस्माकम् । सा सनिः सा प्रार्थना, या इन्द्र पूजयित्वा तस्मिन्कर्तुं प्रसक्तेति भावः । 'सनिस्त्वध्येषणा याच्ञाभिशस्तिर्याचनार्थना' इत्यमरः । केचित्सनिरध्येषणेत्युभयं देवतागुर्वादावाराध्ये सत्कारपूर्वमर्थनेति व्याचक्षते । तथा वा योज्यम् । सानूनासनसानुना अनूनैः समग्रैः असनैः वृक्षविशेषैः सहिताः सानवः प्रस्था यस्य तेन । अनेन गिरिणा हेतुना । आसन्नसूः आसन्नप्रसूः । इन्द्रं संपूज्य तस्मिन्या प्रार्थना कर्तुमिष्यते सा गिरिं सपूज्य तस्मिन्क्रियते चेत्ततोऽपि शीघ्र फलतीत्यर्थः । द्व्यक्षरोऽयममूर्धन्यश्च ॥ ८५ ॥

कल्लोलोल्लोलकीलाले केकाकलकलाकुले ।
कालिकाकलिलालोके काले काले किलैककुः ॥८६॥

**कल्लोलेति** । कल्लोलैः महातरङ्गैः उल्लोलम् उच्चलितं कीलाल जलं यस्मिन् । केकाकलकलैः मयूरध्वनिकोलाहलैः आकुले । कालिका कालमेघः । 'कालिका तु नवाम्बुदः' इति वैजयन्ती । तया कलिलो गहनो मन्दीभूतः आलोको यस्मिन् तादृशि । काले काले प्रतिवर्षासमयम् । एकक्रुः मुख्यभूमिः किल । वर्षपरित्राणार्थमयमुत्तमाश्रय इत्यर्थः । अयमपि पूर्ववदमूर्धन्यश्च ॥ ८६ ॥

पतता पततोपेतः पतितोत्पतितातपः ।
पाता पीतोपतापोऽपि तपःपूतपते पितः ॥ ८७ ॥

**पततेति** । पतता इतस्ततो निष्पतता । पतता पक्षिणा । जातावेकवचनम् । ‘ पतत्पातुकपक्षिणोः ’ इति विश्वः । उपेतः सहितः, विहरत्पक्षिजात इत्यर्थः । पतितोत्पतितातपः उपत्यकासु पतितः सूर्यमण्डलादप्युन्नतासु अधित्यकासु उत्पतितश्च आतपो यस्मिन् । पर्वत इति शेषः । पाता फलमूलादिभिरस्माकं रक्षिता । पीतोपतापोऽपि छायाबाहुल्यादपहृतसंतापश्च । तपःपूतपते तपसा परिपूतेषु श्रेष्ठ । पितः इति संबोधनम् । अयमप्यमूर्धन्यश्च ॥ ८७ ॥

**भूतभूते भूतभृतो भीतताभीतिभूतिभूः ।**
**भातीतो भूभृतो भाभृद्भाता भाता तु भूतितः ॥ ८८ ॥**

**भूतभूत इति** । हे भूतभूते भूता संपन्ना भूतिः लक्ष्मीप्राप्तिः अस्येति तथोक्तः, समृद्धेत्यर्थः । भीतताभीतिभूतिभूः भिया ततानाम् अभीतेः भूतिभूः उत्पत्तिस्थानम्, भीतानामभयदाता अवकाशप्रदानेनेत्यर्थः । भातीतः औन्नत्येन नक्षत्राण्यतीतः । भूतितः ऐश्वर्येण । भूतभृतो भूभृतः शंकरस्य गिरेः कैलासस्य । भाभृत् शोभां बिभ्रत् । अयं पर्वत इति शेषः । भाता भाता अभीक्ष्णं भाता । भातेस्तृच् । आभीक्ष्ण्ये द्विर्भावः । तुकारोऽवधारणे । ‘ तुः पादपूरणे भेदे समुच्चयेऽवधारणे ’ इति विश्वः ॥

**मरुन्मुर्मुरमर्मारिं मारमारेऽमरामरे ।**
**रमारामे मुरारौ रुरामेममुरुमेरुमम् ॥ ८९ ॥**

**मर्विति** । मारमारे मन्मथमन्मथे मन्मथादपि सुन्दरे । अमरामरे दैवतानामपि दैवते । रमारामे लक्ष्म्या मनोहरे । ‘ रामः पशुविशेषे स्याज्जामदग्न्ये हलायुधे । राघवे चासिते श्वेते मनोज्ञेऽपि च वाच्यवत् ’ इति विश्वः । मुरारौ विष्णौ । रुः शब्दः प्रसिद्धिरूपः । मरुन्मुर्मुरमर्मारिम् मरुः

निर्जलप्रदेश एव मुर्मुरः तुषाग्निः तस्य मर्मारि प्राणस्थानवेधिनं शत्रुम्, सर्वत्र जलसमृद्धतया मरुसतापहारिणम्। उरुमेरुमम् उरुः महती मेरुमा मेरुलक्ष्मीः यस्य तम्। इमं गिरिम्। आम जगाम। 'अम गत्यादिषु' इति धातोर्लिट्। विष्णौ यादृशी प्रपन्नरक्षाव्रतित्वादिप्रसिद्धिस्तादृशप्रसिद्धिरिममपि गिरिं प्राप्तवतीत्यर्थः। अयमदन्त्यश्च ॥ ८९ ॥

**रवीरेरावरावारोऽवर वैरिविरावर।**
**विवराराविविवरो वीर वव्रे वरैरुरुः ॥ ९० ॥**

**रवीति।** द्वितीयपादादावकारप्रक्षेपेण अवरेति वैरिविरावरेति वीरेति च सबोधनानि। अस्य विष्णोः वर भक्त। 'वृङ् सभक्तौ' इति धातुः। वैरिणां विरावर शोकभीत्यादिप्रयुक्ताक्रन्दप्रद। 'रा दाने' इति धातुः। रवीरेरावरावारः रविं सूर्यम् ईरयन्ति क्षिपन्ति या इरावराः उत्तमभूमयः तासाम् अवो द्युतिः। 'अव रक्षणगतिकान्ति' इत्यादिर्धातुः। तमृच्छति प्राप्नोतीति तथोक्तः। 'ऋ गतौ' इति धातोः कर्मण्यण्। रविमण्डलस्पृगूर्ध्वभूमिक इत्यर्थः। विवराराविविवरः विवरेषु कोटरेषु आराविणः शब्दायमानाः विवराः पक्षिश्रेष्ठाः यस्मिन्निति तथोक्तः। उरुः महान् अय पर्वतः। वरैः कुङ्कुमवृक्षैः वव्रे वृतः। सर्वत्र कुङ्कुमवृक्षव्याप्त इत्यर्थः। 'श्रेष्ठेऽन्यवत्परिवृतौ वरः काश्मीरजे वरम्' इति विश्वः ॥ ९० ॥

**मानयानन्यनियमो मान्यमेनमनामयः।**
**यमिनां नाम नम्योऽयममेयो मौनमानिनाम् ॥९१॥**

**मानयेति।** मान्य पूज्यम्। एनम्। अनन्यनियमः नियमान्तररहितः सन्। मानय पूजय। अनामयः नीरोगभूमिः। अयं गिरिः। यमिनां तापसानामपि। नम्यो नाम। नामेति प्रसिद्धौ। मौने मुनिभावे मानि-

नामहंकारवताम् । अमेयः अपरिच्छेद्यः । किंतु महर्षीणामेव परिच्छेद्य इत्यर्थः ॥ ९१ ॥

**निःसमानेन मानेन सुमनोमानसैः समः ।**
**सोमसीमासमासन्नसानुमान्सानुमानसौ ॥ ९२ ॥**

**निःसमानेनेति** । निःसमानेन निरुपमेन सर्वपर्वताधिकेन । मानेन वैपुल्येन । सुमनोमानसैः विदुषां मनोभिः अतिविशालत्वेन प्रसिद्धैः । समः । सोमसीमासमासन्नसानुमान् चन्द्रसीमासनिकृष्टशृङ्गवान् । असौ । सानुमान् पर्वतः । इदं श्लोकद्वयं त्र्यक्षरममूर्धन्य च ॥ ९२ ॥

**तातेतातीतितातीतः केकाकाकुककेकिकः ।**
**पापोपपापपापापो नानानानान्ननान्ननीः ॥ ९३ ॥**

**तातेति** । हे तात । इतातीतितातीतः ईतीनाम् अतिवृष्ट्यादीनामत्ययः अतीति । अत्ययेऽव्ययीभावः । इतं प्राप्तम् अतीति येन तस्य भावः इतातीतिता, तया अतीतः अत्यर्थं शोभितः । 'ई गतिप्रजनकान्त्यसनखादनेषु' इति धातुः । केकाकाकुककेकिकः केकाका केकाशब्दः । 'कै गै शब्दे' सपदादिक्विप् । तस्याः कुकाः आदातारः । 'कुक वृक आदाने' इगुपधलक्षणः कः । तथाभूताः केकिनो मयूराः अस्मिन्निति तथोक्तः । शैषिकः कप् । पापोपपापपापापः पापानि महापातकानि ब्रह्महत्यादीनि, उपपापानि गोहत्यादीनि तेभ्यः पापति अतिशयेन पान्तीति पापोपपापपापाः । पातेर्यङ्लुगन्तात् 'आतोऽनुपसर्गे कः' इति कः । तथाभूता आपोऽस्मिन्निति तथोक्तः । 'ऋक्पूरब्धूः—' इति समासान्तः । सर्वत्र पुण्यजलव्याप्त इत्यर्थः । नानानानान्ननान्ननीः । अन्नशब्दो नाना अनाना इत्युभयेन प्रत्येकमभिसंबध्यते । तथा च नानान्नाः सर्वाहारभोगिनः अनानान्ना. नियमे-

ताहारास्तपस्विनः नाम्ना अन्नरहिताः उग्रे तपसि स्थिताः। नसमासत्वा-न्नकारलोपाभावः। तान्सर्वानपि तत्तदभिमतान्नप्रदानेन तपःसिद्धिप्रदा-नेन च नयति रक्षतीति तथोक्तः। एवंभूतोऽस्य गिरिः ॥ ९३ ॥

**ययॆ या याय यो योऽयः**
**स सोऽसौ सास सासुसूः।**
**मम मामोऽममामाम**
**गोगागोगागगोगगुः ॥ ९४ ॥**

**ययॆ इति**। ई अये या या अय यो यः अयः स सः असौ सास सासुसूः मम मामः अममामाम गोगागोगागगोगगुः इति पदविभागः। ययॆ इत्यत्र 'इको यणचि' इति ईकारस्य यकारः। अये इत्यामन्त्रणम्। अ विष्णुं प्रपन्नतया यातीति विग्रहे 'आतोऽनुपसर्गे कः।' सास स्यन्ति हिंसन्तीति साः रिपवः। 'षो अन्तकर्मणि' इति धातोः क्विप्। तान-स्यति क्षिपतीति तथोक्तः। अममामाम अमेषु लक्ष्मीरहितेषु मां लक्ष्मीं मामोति अतिशयेन बध्नातीति तथोक्तः। 'मव बन्धने' इति धातो-र्यङ्लुकि 'अन्येष्वपि दृश्यते' इति डः। टिलोपः। दरिद्रपोषणरतेति यावत्। इमानि त्रीणि संबोधनानि। गोगागोगागगोगगुः गावः किरणाः तासां गाः सञ्चाराः। 'गाङ् गतौ' इति धातोर्भावे क्विप्। तास्वागो निरोधलक्षणमपराधं गच्छन्ति ये अगाः वृक्षाः तेषां गाः अधोभूभागान् गताः प्राप्ता गावः सुरभयोऽस्येति तथोक्तः। सूर्यकिरणप्रवेशनिरोधित-वृषण्डविश्रान्तास्मद्गोकुल इत्यर्थः। 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्व उकारः। समासान्तविधेरनित्यत्वान्मध्यमगोशब्दात्समासान्ताभावः। सासुसूः असून् प्राणान् सूत इत्यसुसूः तया सहितः द्रोणाद्रिरिव संजी-वनौषधिमान्। असौ गिरिः। या या ई लक्ष्मीः। अकारवाच्यस्य विष्णोः

रिरिति शेषः। एतेषु त्रिषु श्लोकेषु पादैकाक्षररूपश्चतुरक्षरो वर्णचित्रप्रभेदः। दूदादीं ददादित्यत्र 'मोऽनुस्वारः' इत्यनुस्वारे कृते 'वा पदान्तस्य' इति परसवर्णादेशविकल्पनाददनुस्वारयुक्त एव पाठः। अतो नैकाक्षरत्वभङ्गः॥

**नानानानानानानानाना नाना नाना ना नाना।**
**न्ना नानानाना ना नानानानाना ना नानानाना॥**

**नानेति**। नाना अनेकम् अर्च्याद्भिन्नं यत् तत् नाना भिन्नमेव। अनर्च्यत्वेन यत्त्वस्थितं तत्कदाप्यर्च्यं न भवतीत्यर्थः। यत् अनाना नार्च्यभिन्न नियमेनार्च्यं तत् अनाना अनर्च्यं कदापि न भवति। यच्च नानानाना कैश्चिदर्च्यं कैश्चिदनर्च्यं च तदपि नानानाना तथैव व्यवस्थितमित्यर्थः। एषा वस्तुस्थितिः पूर्वार्धेन प्रदर्शिता, अभ्रान्तान्प्रतीति शेषः। यत् नाना अनेकमर्च्याद्भिन्नं तत् अनाना अनर्च्यभिन्नं अनर्च्यमपि भ्रान्त्या अर्च्यत्वने गृह्णन्ति। एव यत् अनाना अर्च्याभिन्न तत् नाना ततो भिन्नम्। यत् नानानाना पुरुषभेदेनार्च्यानर्च्यम् तत् अनानानाना तद्विपरीतम्। इत्थंतत्त्वातत्त्वरूपलोकस्थितिप्रदर्शनस्य उत्तरश्लोके उपयोगः। इत्थं क्वचिन्मूलश्लोक एवास्य श्लोकस्य व्याख्यान दृष्टम्। विधान्तरेणापि वय व्याचक्ष्महे। हे नानानानानानान नाना अनेकविधाः अनाः बलवन्तः पक्षाः। 'अन प्राणने' इति धातोः पचाद्यच्। अनानाः ततोऽन्ये दुर्बलाः पक्षाः। अनशब्देन बलवद्वाचिना नञर्थस्य अनशब्दस्य समासः। अनशब्दोऽपि नञर्थोऽस्तीत्युक्तं शृङ्गारप्रकाशिकायां भोजराजेन। उदाहृतं च तत्रैव 'अनोपमा ते बुद्धिः' इति। तानुभयान् आ समन्तात् नानयति भृशं गच्छति सम्यग्जानातीति तथोक्तः। 'नय गतौ' इति धातोर्ज्ञानवृत्तेर्यङ्लुगन्तात् क्विपि 'लोपो व्योर्वलि' इति प्रथमं वेरपृक्तस्य लोपाद्वलीयसि वलि यलोपे ततो वेरपृक्तस्य लोपे च सति नानशब्दो ज्ञातृवाची। नानाविधप्रबलदुर्बलपक्षविवेचनकुश-

लेत्यर्थः । यद्वा नानाविधप्रबलदुर्बलप्राणिसरक्षकेत्यर्थः । अस्मिन्पक्षे ' नय गतौ ' इति स्थाने ' नय रक्षणे' इति धातुः । सेवमन्यत्पूर्ववत् । अन विष्णु-भक्त । इदमपि संबोधनम् । अं नमतीति विग्रहे अन्येष्वपि—' इति डप्रत्यये टिलोपः । अना अमर्त्यो देवः । नाना देवव्यतिरिक्तः । अनृशब्देन नसमासः । नाना उभयम् । 'नाना विनार्थेऽपि भवेन्नानानेकोभयार्थयोः' इति विश्वः । ना जगन्नेता नारायणः ' नयतेर्डिच्च ' इति ऋच्प्रत्ययः डित्त्वविधानाट्टिलो-पश्च । ना पुरुष इति वा । नृशब्दस्य नारायणपरत्वं तस्यैव स्वातन्त्र्यादि-पुरुषगुणपौष्कल्येन मुख्यपुरुषत्वात् । यथोक्त नारसिंहपुराणे—'स एव वासुदेवोऽय साक्षात्पुरुष उच्यते । प्रकृतिस्पर्शराहित्यात्स्वातन्त्र्याद्वैभवादपि' इति । न निषेधे अना अनारायणः । देवः अदेवो वा सर्वोऽपि सर्वान्तर्या-मिविष्ण्वात्मक एवेत्यर्थः । अत एव सर्वत्र देवे अदेवे च पूजनीयत्वादिन्द्रो देव इति तत्र विशेषपक्षपातो न कार्य इति भावः । अनेन पूर्वार्धं व्याख्या-तम् । तर्हि सर्वत्रापि पूजा विष्णुपूजेत्याविशेषे तव वा गिरौ कः पक्षपात इत्याशङ्कायामुत्तरार्धम् । न निषेधे । अः रक्षकः । 'अव रक्षणे' इति धातोः विचि वलि वलोपः । नानानान् नाना विनाभूता आनान् आनतिः पूजा यस्य तथोक्तः । रक्षकः कदापि पूजारहितो न भवति, नियमेन पूज्यत इत्यर्थः । तथा च गिरिरस्माक रक्षक इति पूजनीय इति भावः । नानिति नमतेर्भावे क्विप् । 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः । 'मोनो धातोः ' इति नत्वम् । आः इति कोपे । नाः अरक्षकः । अकारेण रक्षकवाचिना नसमासः । नानान् आनतिरहितः । अरक्षको न पूजनीय इत्यर्थः । तथा चास्माकमिन्द्रो न रक्षक इति न स पूजनीय इति भावः । अनेन तृतीयपादश्चतुर्थे नकारमात्रं च गतम् । आनाना अस्य विष्णोः अनः श्वासः आनः अना अकौटिल्यकारिणी । ' णस कौटिल्ये ' इति धातोर्भावे क्विप् । नसमासे च अनसम् अकौटिल्यं करोतीति

तत्करोतिण्यन्ताट्टिलोपे पचाद्यचि 'णेरनिटि' इति णिलोपे च सति अने-त्युक्तार्थे रूपम्। आनश्चासौ अना चेति विशेषणद्वयसमासः। भगवन्निश्वाः-सरूपतया अपौरुषेयत्वाद्विप्रलम्भादिकौटिल्यरहितेत्यर्थः। नाः शब्दः, विशे-षणबलात् श्रुतिरिति लभ्यते। 'णासृ शब्दे' इति धातोर्भावे क्विप्। नाना न अनेकरूपा न भवति। अना शूद्रविरोधिनी। 'अथ हास्य वेदमुपशृण्वतः' इत्यादिस्मरणात् शूद्रैरनध्येतव्येत्येतदपि श्रुतिविशेषणम्। 'अः शूद्रे ब्रह्म-विष्णवीशकमठेष्वङ्गणे रणे' इति नानार्थरत्नमालाया दर्शनात्। अकारेण शूद्रवाचिना अधर्मवद्विरोधार्थनञ्समासे नुटि च सति अनेत्युक्तार्थे रूपम्। उपजीव्यः पूजनीय. अनुपजीव्यो वेति विषये वीक्षणीया श्रुतिरनेकरूपा न भवति। किंतु 'यो वै स्वां देवतामतियजते' इत्यादिक्रमेण स्वदेवताति-क्रमनियममेव बोधयतीत्यर्थः। तथा च विकल्पशङ्काया अपि नावकाश इति भावः। अयमेकाज्झल्। अचामाकाराणां हलां नकाराणां चैकत्वात्। अत एव बहुचित्रसमुच्चयः। एकस्वरं स्वरचित्रम् एकाक्षरं वर्णचित्रम् द्विस्थान स्थानचित्र गोमूत्रिकासर्वतोभद्रकङ्कणबन्धपद्मबन्धादिनिबन्धचि-त्राणि श्लोकानुलोमप्रतिलोमरूप गतिचित्रम् अभ्यस्तमहायमक चेति बहु-शब्दालङ्कारसमुच्चयः। विद्युन्मालावृत्तम् ॥ ९६ ॥

**इति तत्त्वमतत्त्वं च यथावदवगाढया।**
**अर्च्यानर्च्यौ धिया भिन्दन्गोधनान्यव गाढया ॥**

**इतीति**। इति उक्तप्रकारेण। तत्त्वं पूर्वश्लोके पूर्वार्धोक्तमबाधितमर्थम्। अतत्त्वम् उत्तरार्धोक्त भ्रमकल्पितमर्थं च। यथावत् सम्यक्। अवगाढया। गाढया दृढया। धिया। अर्च्यानर्च्यौ। भिन्दन् विविञ्चन् सन्। गो-धनानि। अव रक्ष। पूर्वश्लोकस्य द्वितीयव्याख्याने तु अर्च्यानर्च्यविवेचन रूपेण तत्त्वातत्त्वाभिज्ञानेन इत्यर्च्यानर्च्यौ विविञ्चन्निति योजना ॥ ९७ ॥

नयानयानयानयानयानयानया ।
नयानयानयानयानयानयानया ॥ ९८ ॥

यानयानयानयान यानयानयानयान ।
या नयानयानया न यानयानया न या न ॥ ९८ ॥

**नयानयानिति**। नयाः नीतयः अनया. अनीतयश्च नयानैयाः तान्। अयाः शुभावहा विधयः अनयाः तद्विपरीताश्च अयानयाः तान्। अयानयानया अयानम् अवाहनं यान गमन यस्यास्तया परोपदेशमनपेक्ष्य स्वत एव प्रसमरयेति यावत्। अनया पूर्वश्लोकोक्तया बुद्ध्या। नय अपनय। आनय आहर। अनयान् नयरहितान् पुरुषान् अमार्गान्वा अयान् अगच्छन्। यातेः शतृप्रत्ययः। अयानयानयानया अः विष्णुः यानं गतिः शरण येषां ते अयानाः तेषां यानं मार्गः। अधिकरणार्थे ल्युट्। अत्र यान गतिर्यस्यास्तया सत्त्वमार्गसंचारिण्येत्यर्थः। एवं योजना। हे तात त्वम् अनयान् अयान् सन् अयानयानयानया अयानयानया अनया नयानयान् अयानयांश्च नय आनय चेति। नयान् अयांश्च आनय, अनयान् अनयांश्च नयेति यथार्हमन्वयः। अस्य श्लोकस्य यानेत्यादिप्रतिलोमपाठेऽपि योजना। तत्र यानयानयानयानेति प्रथमपादे संबुद्धिः। यानैः स्यन्दनादिभिः यानं गमन येषां तेषां याने मार्गे यान सचारोऽस्येति तथोक्तः घण्टापथसंचारिन् कुमार्गेष्वप्रवर्तिष्णो इति तात्पर्यार्थः। तथा द्वितीयपादे संबुद्धिः। तत्र यानं विनाशः तस्य यान प्राप्तिसाधनम्। करणे ल्युट्। तस्य यानम् अपगमकारणम्, तथाभूत यानमाचरणमस्येति तथोक्तः। क्षयहेतुदुरितापनोदकसदाचारनिरतेत्यर्थः। तृतीयपादे येति प्रस्तुता बुद्धिः परामृश्यते। नयानयानया नयानयौ नीत्यनीती अनया अगन्त्री। नयतेः पचाद्यच्। नञ्समासः। न तथाभूता न भवति,

नयानयौ प्रविष्टैवेत्यर्थः। चतुर्थपादेऽपि येति पुनर्बुद्धेः परामर्शः। नेति निषेधे। यानयानया। इः कामः तस्य आनयानामनर्थहेतूनाम् अनया अगन्त्री। पुनश्च नेति निषेधे। तथा च नञ्द्वयेन रागादिदोषहेतूनप्राप्तैवेति उक्तार्थः स्थिरीक्रियते। तया बुद्ध्या भिन्दन्निति पूर्वश्लोकेनान्वयः। एवं क्वचिन्मूलकोशकारव्याख्यान दृष्टम्। विधान्तरेणापि योजयामः। नयान् नीतिमार्गान् अयाः अध्यगच्छः। न निषेधे। यानयान् ई लक्ष्मीः तस्याः आनयान् आनेतॄन् सपत्करान्। अयानयान् अयः शुभावहो विधिः, सः आनयः प्रापको येषां तान् भाग्यलभ्यान्। अय विद्वन्। गत्यर्थत्वाज्ज्ञानार्थता। अनया प्रकृतया धिया। न निषेधे। यानयान् याः यान नाशः। भावे क्विप्। तस्य अनयान् अगन्तॄन् अविनश्वरफलान्। अयानयान् अस्य विष्णोः ईः गतिः। भावे क्विप्। एः भगवद्विषयिणी प्रतिपत्तिः, तस्या आनयान् परितो रक्षकान्। इन्द्रादिदेवतान्तरव्यावृत्त्या भगवदैकान्त्यप्राणा प्रपत्तिः सरक्ष्यत इति भावः। गिरियजनं तु स्वदेवतायजनचोदनायत्तामिति तात्पर्यम्। अयानयान् इः कामः तेन आनयः समन्ताद्भ्रमणम्। 'नय गतौ' इति धातुः। तद्विरुद्धान्। अधर्मवद्विरोधार्थकनञ्समासः। अयानया विष्णुशरणया। इत्थ पदयोजना। हे अय अयानया अनया अनया यानयान् अयानयान् यानयान् अयानयान् अयानयान् नयान् न न अयाः अया एव। ततस्तवानया अर्च्यानर्च्यविवेचनं युक्तमिति भावः। प्रतिलोमपाठेऽप्येवमेव योजना। पदानि परं स्थानव्यत्यासेन ग्राह्याणि। तत्रैव पदविभागः— यानयान् अयानयान् अयाः नयान् अय अनया न यानयान् अयानयान् अयानयान् अयानयान इति। तत्र तृतीयपादान्ते अकारो नञ्पदरूप उत्तरत्र समस्यत इति न पदान्तयतिविरोधशङ्का। अयं झज्झल् बहुचित्रसमुच्चयः। चित्रबहुत्वं यथासंभव पूर्ववद्द्रष्टव्यम्॥ ९८॥

**मायाभासा साभायामा या सूताया यातासूया ।**
**भातायायायायाताभा सा यायागे गेयायासा ॥९९॥**

**मायेति** । मायावदवभासत इति मायाभासा आश्चर्यरूपा । तत्र हेतुः, साभायामा आभायाः नवनवोन्मेषशालिन्याः प्रतिभायाः आयामेन वैपुल्येन सहिता । येति प्रकृता बुद्धिः परामृश्यते । सूत उत्पादितः आयः धना-गमः अनयेति सूताया । यातासूया अपगतासूया । भात उन्मिषितः अयस्य शुभावहविधेः आयायः आगमनमस्या इति भातायायाया, स्वप्रेरकेण शुभावहविध्यौन्मुख्येन युक्तेत्यर्थः । आङ्पूर्वाद्यातेर्भावे घञि 'आतो युक्चिण्कृतोः' इति युगागमे च सति आयाय इति रूपम् । अया-ताभा अय देवम् अतति सतत गच्छतीत्ययाता आभा बुद्धिवृत्तिरस्या इति तथोक्ता । सेति यत्पदनिर्दिष्टा बुद्धिः प्रतिनिर्दिश्यते । अयाया अ विष्णु यान्तीत्ययाः तानयत इति तथोक्ता भागवतप्रवणा । अगे पर्वते विषये । गेयायासा गातव्यपरिश्रमा । या एवभूता सा तव धीः अगे गेया-यासेत्यन्वय. । त्वय्युक्तरूपया धिया परामृश्य शङ्कां विहाय पर्वतं पूज-यितु प्रवृत्ते त्वद्बुद्धेरुचितार्थालोचनपरिश्रम लोका गायन्त्वित्यर्थः । सर्वतो-भद्र नाम बन्धचित्रमिदम् । अस्य विन्यासक्रमः । चतुरश्रं लिखित्वा तदन्तास्तिर्यगूर्ध्व च सप्त सप्त रेखाः लिखेत् । तत्र अष्टभिरष्टभिः कोष्ठैः युक्ता अष्टौ पङ्क्तयो भवन्ति । तत्र प्रथमादिपङ्क्तिचतुष्टये क्रमेण श्लोकस्य पादान् लिखित्वा पञ्चमादिपङ्क्तिचतुष्टये व्युत्क्रमेण पादान् लिखेत् । तत्र चतसृष्वपि बाह्यपङ्क्तिषु प्रथमः पादो वाचयितु शक्यते । तथा द्वितीयासु द्वितीयस्तृतीयासु तृतीयश्चतुर्थीषु चतुर्थः ॥ ९९ ॥

**सेवा माननमावासे वासिताहिहितासिवा ।**
**माता पिता तापिताभा नहितातता हि न ॥१००॥**

**सेवेति।** हे वासिताहिहित वासिताहिः छिन्नवृत्रासुर इन्द्रः। 'वस-च्छेदने' इति चौरादिको धातुः। तस्य हित इन्द्रपक्षपातिन्निति सोल्लुण्ठनं संबोधनम्। यद्वा वासिताहिः निवासीकृतभुजङ्गः शेषशायी तस्य हित विष्णुभक्तेत्यर्थः। आवासे निवासत्वेन सोपजीव्ये विषये। सेवा। मानन माया लक्ष्म्या आननं मुखम् अननं प्राणनमिति वा, उभयथापि संपदभिवर्धनीत्यर्थः। आसिवा अवश्यमसन्ति दीप्यन्ते इत्यासिनो भूषणवः। 'अस गतिदीप्त्यादानेषु' आवश्यकार्थे णिनिः। तान्वाति गच्छतीति तथोक्ता, भाग्यवल्लभ्येत्यर्थः। 'वा गतिगन्धनयोः'। माता मातृवत्पोषयित्री। पिता पितृवद्धितप्रवर्तिनी। तापितामा संतापितरोगा, समस्तदुरितनाशिनीत्यर्थः। सेवा क्रियमाणैव तापितामा भवतीति कारणकार्ययोः पौर्वापर्यविपर्ययनिबन्धनः **अतिशयोक्त्यलङ्कारः**। नहितातता नहित हितविरुद्धम् अतन्ति गच्छन्तीति नहिताताः तैस्तता व्याप्ता न हि भवति दुष्कृतिभिर्न लभ्यत इत्यर्थः। इदमपि सर्वतोभद्रम्॥ १००॥

**गेहा देववदेहागे हासताननतासहा।**
**देतानयायानतादेऽव नयात तयानव॥ १०१॥**

**गेहेति।** हे देववद देवभक्त भगवन्नामसंकीर्तनपर। आनतादे आनतानां प्रवणानाम् आदे मुख्य। नयात नीतिगामिन्। 'अत सातत्यगमने' इति धातोः कर्मण्यण्। आनव बलशालिन्। 'वा गतिगन्धनयोः' इति धातोः कप्रत्ययः। इमानि चत्वारि संबोधनानि। इह अगे अस्मिन् पर्वते विषये। गेहा गा गानम्। 'गै शब्दे' भावे क्विप्। तस्याम् ईहा इच्छा स्तोतुमिच्छेति यावत्। हासताननतासहा हाः गतिः भजनम्। 'ओहाङ् गतौ' क्विप्। तस्या आसो दीप्तिश्चिरानुवृत्तिः, तं तन्वन्तीति

ह्रासतानाः चिरसेव्याः । कर्मण्यण् । तेषां नतं नमस्कारः । तस्य असहा न सहत इत्यसहा । अस्मिन्पर्वते स्तोतुमिच्छैवाभिलषितं प्रयच्छन्ती चिरसेव्यानामिन्द्रादिदेवानां सेवासु प्रवृत्तिं प्रतिबध्नातीत्यर्थः । किंच देतानयाया दाः लवनम् । 'दाप् लवने' इति क्विप् । ताम् इताः प्राप्ताः । अनयानाम् अनीतीनाम् आयाः आगमनानि यया सा तथोक्ता, सर्वानिष्टनिवारिणीति यावत् । एवंभूतया तया एतत्पर्वतस्तवनेच्छया अव रक्ष । गोकुलमिति शेषः । चतुर्थपादादावकारप्रश्लेषेण अवेति क्रियालाभः । इदमपि सर्वतोभद्रम् ॥ १०१ ॥

नदीसारसमेतात्र दीप्ता भासा नरावृता ।
साभानासौ माभिरामे रसा सौम्या सुमानस ॥

नदीति । हे सुमानस शोभनचित्त । साभान आभानसहित तेजस्विन् । मया लक्ष्म्या अभिरामे । अत्र पर्वते । नदीसारसमेता सरित्प्रवरयुक्ता । भासा मणिगणार्चिषा । दीप्ता । नरैरावृता । असौ रसा भूमिः । सौम्या मनोज्ञा । अर्धभ्रमकमिदम् । तस्य विन्यासक्रमः सर्वतोभद्रवत् । पादार्धानामेव भ्रमणम्, न तु पादानामिति विशेषः ॥ १०२ ॥

वसुदा त्रसदानन्द धीसुदान्त मुदा नता ।
तानदा मुक्तिदा रम्या सनदात्र सदा रसा ॥१०३॥

वसुदेति । हे त्रसदानन्द भीतानामभयप्रदानेनानन्दकारिन् । त्रसतः आनन्दयतीति कर्मण्यण् । धीसुदान्त धिया सुष्ठु निगृहीतेन्द्रिय । अत्र पर्वते । वसुदा धनरक्षिणी । 'देङ् रक्षणे' इति धातुः । मुदा नता मुदा सतोषभारेणैव नता वास्तव्यजनहर्षनिर्भरेति यावत् । तानदा तानयन्ति श्रद्दधत इति तानाः क्षेत्रविश्वासयुक्ताः । 'तनु श्रद्धोपकरणयोः' इति

धातुः । तान् दयते रक्षतीति तानदा । मुक्तिदा अपवर्गप्रदा । सनदा नदसहिता । रसा भूमिः । सदा रम्या । मुरजबन्धोऽयम् । अस्योद्धारस्तु । 'तिर्यग्रेखा लिखेत्पञ्च नवोर्ध्वास्तत्र पङ्क्तयः । अष्ट कोष्ठाश्चतस्रः स्युस्तासु श्लोकं लिखेत्क्रमात् । आद्याङ्घ्री आद्ययोः पङ्क्तयोर्वाच्यो गोमूत्रिकाक्रमात् । किं त्वेकं द्वितयं द्व्येकं द्वयमेकमिति क्रमात् । यद्वा द्वितयमेकं च द्वयमेकं द्वयं पुनः । स्वपङ्क्तिप्रक्रमादेवं विन्यासद्वितयं भवेत् । एवं तृतीयतुर्याङ्घ्री स्वपङ्क्त्योस्तदुपक्रमात् । अथान्योऽयं वचनप्रकारः । तत्राद्यद्वित्रितुर्यासु तुर्यत्रिद्व्याद्यपङ्क्तिषु । आदिद्वित्रिचतुःपञ्चषट्सप्ताष्टमकोष्ठगः । दृश्यते प्रथमः पादश्चतुर्थश्चैवमेव हि । चतुर्थपङ्क्तिप्राथम्यात्प्रथमावधिवीक्षणात् । द्वितीयादावाद्यद्वित्र्योर्द्वितुर्ये त्रितुरीयके । तुर्यत्रिद्व्योस्तृतीयाद्ये द्रष्टव्योऽङ्घ्रिर्द्वितीयकः । तृतीयाङ्घ्रिर्द्वितीयान्त्ये आद्यसप्तमषष्ठयो । द्वित्रिपञ्चमयोस्तुर्यषष्ठसप्तमयोः क्रमात् । तृतीयान्त्ये च लक्ष्योऽय बन्धे मुरजसंज्ञके ॥ १०३ ॥

सद्दैवेऽङ्कुरयातवैभवलताशोभ्युच्चनानागमे
भव्यं कर्म सदार्चितोद्भव नदीयादःसनाथीकृते ।
चित्राटव्यनुवाहिवातवलनश्रेयःप्रचेयोत्सवे
वेदोक्त्या समये भजेः शुचि गिरौ मेरून्नतेऽस्मिन्ध्रुवे ॥

**सद्दैव इति ।** हे अर्चितोद्भव अर्चितः उद्भवः यस्येति तथोक्तः जगत्पूज्यात्पितुरुत्पन्नेत्यर्थः । सद्दैवे सतां भागधेये । श्रेयस्करत्वात्तथारोपः । अङ्कुरयातवैभवलताशोभ्युच्चनानागमे अङ्कुरैः पुष्पफलादिकन्दलैः यातवैभवाभिः प्राप्तैश्वर्यादिभिः लताभिः शोभिनः शोभमाना उच्चा उन्नताः नानाविधाः अगमाः वृक्षा यस्मिन् तस्मिन् । नदीनां यादोभिः जलजन्तुभिः सनाथीकृते सहितीकृते । पूर्वं तैरसहितो वर्षासमयेन तत्सहितीक्रियत इति

च्विप्रत्ययः । चित्रास्तटवीषु अनुवाहिनाम् आनुलोम्येन वहनशीलानां वातानां वलनं चलनमेव श्रेयः शुभनिमित्तत्वात् तेन प्रचेयाः संवर्धनीयाः उत्सवा यस्मिन् तस्मिन् । इदानीमनुकूलवायुबलादिहास्माकमुत्सवप्रचय उन्नीयत इति भावः । मेरुवदुन्नते । ध्रुवे शाश्वते । अस्मिन् गिरौ । वेदोक्त्या 'यो वै स्वाम्' इत्यादिश्रुतिवचनेन । भव्यम् योग्यम् । शुचि शुद्धं सत् कर्म बल्युपहाररूपम् । समये अस्मिन्प्राप्तकाले । भजेः प्राप्नुयाः । चक्रबन्धोऽयम् । अस्योद्धारस्तु, दशमण्डलरेखात्मके नवमण्डलान्तरालवर्तिनाभिस्थानेन सहैकोनविंशतिकोष्ठ वीथित्रय विलिख्य तत्रैकस्यां वीथ्यामाद्यपाद लिखित्वा प्रादक्षिण्येन द्वितीयवीथ्यां द्वितीयं तृतीयवीथ्यां तृतीय च लिखित्वा नेमिस्थाने वीथीनामाद्यन्तकोष्ठैः कोष्ठषट्कवति कोष्ठद्वयमध्येषु प्रत्येक कोष्ठयुगललेखनेनाष्टादशकोष्ठानि संपाद्य तृतीयपादान्तवर्णकोष्ठमारभ्य प्रादक्षिण्येन नेमिकोष्ठेषु चतुर्थपाद लिखित्वा तत्रैव समापयेत् । तत्र नाभिस्थाने आद्यपादत्रयस्य दशमाक्षरं संश्लिष्टं भवति । पादत्रयस्याप्याद्यवर्णैः सह नेमिकोष्ठेषु चतुर्थपादोद्धार । तृतीयपादान्तवर्णेन सह चतुर्थपादाद्यन्तवर्णौ श्लिष्टौ भवतः । तृतीयषष्ठवलययोः वेङ्कटनाथीयो यादवाभ्युदय इति कविकाव्यनामोद्धारः ॥ १०४ ॥

**वासे नास्मिन्पूजादेवा वादे जातातोद्याराावा ।**
**वाराद्याविर्भूताजीवा वाजीतात्रादीना सेवा ॥१०५॥**

**वास इति** । हे वादे वदस्य वक्तुरपत्यं विद्वत्सुत । 'अत इञ्' इत्यपत्यार्थे इञ्प्रत्ययः । वासे निवासभूते । अस्मिन् पर्वते । जातातोद्यारावा सजाततूर्यघोषा । पूजा । अदेवा देवरहिता । न भवति । अयमेव पर्वतः पूजायाः प्रतिग्रहीता अनुग्रहशक्तश्च देव इति केवलशिलाकूटपूजेयं निष्फला भविष्यतीति न शङ्कनीयमिति भावः । तस्मात् अत्र पर्वते

वाजीता वाजवद्भिरिता घृतप्रचुरैरुपहारैः प्राप्ता । 'वाजो घृते च यज्ञाङ्गे' इति विश्वः । अदीना उदारा । सेवा इय पूजा । वाराद्याविर्भूताजीवा वाः जलम् आदिशब्देन तृणादिः समुच्चीयते । वारादय आविर्भूताः आजीवा जीविका यया तथाभूता भविष्यतीति शेषः । इन्द्रपूजया प्रार्थ्यमानां तृणजलादिसमृद्धिं गिरिपूजैव शीघ्रं दास्यतीत्यर्थः । अष्टदलपद्मबन्धः । कर्णिकायां न्यसेदेकं द्वे द्वे दिक्षु विदिक्षु च । प्रवेशनिर्गमौ दिक्षु पद्मबन्धो भवेदयम् ॥ १०५ ॥

**सानुमानयमतीततारकः सानुमानयमतीततारकः ।**
**सानुमानयमतीततारकः सानुमानयमतीततारकः ॥**

**सानुमानिति ।** अथ सानुमान् शिखरी । अतीततारकः अतिक्रान्तनक्षत्रपथः । सानुमानयमतीततारकः सानूनां शैलमार्गाणां मायाः शोभायाः आनयाः आनेतारः मत्या इच्छया इताः प्राप्ताः तत्तत्पुरुषाभीष्टाकाराः ताराः श्लाघ्यमौक्तिकानि यस्मिन् स तथोक्तः । शैषिकः कप्रत्ययः । 'सानुः शृङ्गे शैलमार्गे' इति विश्वः । सानुमानयमतीततारकः अनुमानं प्रागाश्रितानां सरक्षणादस्मानप्याश्रयणेन रक्षिष्यतीति लैङ्गिको निश्चयः । तत् यातीति अनुमानया मतिः बुद्धिः । 'मतिः काङ्क्षा शेमुषी च' इति यादवः । तया सहिताः सानुमानयमतयः । तथाभूताः सन्तो ये इताः प्रपन्नाः तेषां तारकः विपन्निवारकः । सानुमानयम् सा भक्तिः 'वन षण संभक्तौ' भावे क्विप् । 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः । 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः । तया अनुमा आनुपूर्व्येण शास्त्रीयक्रमेण पूजा । 'मान पूजायाम्' क्वौ णिलोपः । शेष पूर्ववत् । तस्याः नयं नीतिं मर्यादाम् अति अतिक्रम्य ईततारकः ईतताः श्रिया व्याप्ताः आरकाः प्राप्तारः यस्य तथोक्तः । 'ऋ गतौ' ण्वुलि

वृद्धिः। यस्याः पूजाया यावत्फलमुचितं तया पूजया तावदधिकं फलं पूजकेभ्यः प्रयच्छतीत्यर्थः ॥ १०६ ॥

**विराजमानादसमान भूमाविराजमानादसमानभूमा ।**
**विराजमानादसमानभूमा विराजमानादस मानभूमा ॥**

**विराजमानादिति** । विराजमानात् भ्राजमानात् । भूमाविराजमानात् भूश्च मा च ताभ्यां विराजत इति भूमाविराजः श्रीभूमिसहितो हरिः, तस्य मानात् ज्ञानाद्धेतोः । असमानेति नन्दसबोधनम् । दीप्यमानेत्यर्थः । ब्रह्मविद इव ते मुखं भातीति ब्रह्मविदः शोभाविशेषश्रवणात् । यद्वा असमः अनः जीवनमस्येति व्युत्पत्त्या निरुपमजीवनेत्यर्थः । असमानभूमा नि सममहिमवान् । यद्वा अनस्य बलस्य भूमा प्रचयः । स असमः यस्येत्यर्थः । असमानभूमा अविकलजीवनबाहुल्यवानित्यर्थो वा । 'षम वैकल्ये' इति धातुः । विराजमानात् विना गरुडेन राजमानो यः हरिः तम् अत्ति अनुभवतीति तथोक्तः, भगवद्ध्यानपर इत्यर्थः । असमानभूमा मानः आग्रहः । 'मानश्चित्तोन्नतौ ग्रहे' इति विश्वः । तस्य भूः उत्पत्तिः तया सहिता न भवतीति असमानभूः मान् बुद्धिः यस्य स तथोक्तः । 'मन अवबोधने' इति धातोः भावे क्विबन्तो मान् शब्दो नकारान्तः । एवं भूतस्त्वमिति शेषः । विराजमानात् विः पक्षी तस्य राः शब्दः । 'रै शब्दे' क्विप् । तस्या जातो मानः बहुमानः । तमवलम्ब्येति ल्यब्लोपे पञ्चमी । मम वचने असारेऽपि शुकभाषित इव बहुमानमवलम्ब्येत्यर्थः 'शृणुत मे शकुनेरिव भाषितम्' इत्यादावुपक्रान्तमन्तेऽपि स्मार्यते । मां लक्ष्मीमानयति उज्जीवयतीति मानः सपदुन्मेषको भूमा महिमा यस्य तथाभूतः सन् । अस दीप्यस्व । 'अस दीप्तौ' । श्लोकद्वयेऽपि पादचतुरावृत्तिरूपं महायमकम् ॥ १०७ ॥

अक्लिष्टचित्रमिदमत्र मनागिवोक्तं
चित्रायुतानि सुवचनानि पुनस्तथापि ।
कृत्यं विभोर्निगमनीयमनन्यभक्तै-
राराध्यतां हरिरसौ पृथिवीधरात्मा ॥ १०८ ॥

**अक्लिष्टेति** । अत्र अस्मिन्गिरौ । मनाक् अल्पम् । इवेति वाक्यालङ्कारे । इदम् अक्लिष्टचित्रम् अनुन्मृदितपरमाश्चर्यम् । उक्तम् । चित्राणाम् एवंविधानाम् अयुतानि । सुवचानि । तथापि । विभोः भगवतः । कृत्य पूजालक्षणम् । निगमनीयं सपादनीयम् । अन्नकूटाद्यानयनमेव पूजोपक्रम कृत्वा निगमनीयमित्युक्तम् । अतो गिरिवर्णनेनैव कालयापन न कर्तव्यमिति भावः । अतः पृथिवीधरात्मा पर्वतरूपः । असौ अयम् । हरिराराध्यताम् । अनेन कवेः शब्दचित्रनिगमनमपि गम्यते, अत्र काव्ये मनागिव दुर्योजत्वादिक्लेशरहितं शब्दचित्रमुक्तम् । एवविधान्यन्यानि खड्गबन्धनागबन्धादीनि चित्राणि सुवचानि । तथापि विभोः कृष्णस्य कृत्यं चरित काव्यप्रतिपाद्य निगमनीय समापनीयमिति तत्समाप्तिसौकर्याय चित्रग्रथनमुपसंह्रियते । ललितश्लोकैरिव चित्रश्लोकैः श्रोतॄणां सुखबोधासभवादिति ॥ १०८ ॥

इति कथयति कृष्णे गोपवृद्धा निदध्युः
शरणमशरणानां शाद्वलश्यामलाङ्गम् ।
पुलकितवनमालं पुष्पकिञ्जल्कजालैः
पुरुषमचलशृङ्गे पुण्डरीकायताक्षम् ॥ १०९ ॥

**इति कथयतीति** । कृष्णे इति कथयति सति । गोपवृद्धाः नन्दादयः । अचलशृङ्गे गोवर्धनशिखरे । अशरणानाम् अनन्यशरणानाम् । शरणं रक्षितारम् । शाद्वलश्यामलाङ्ग शाद्वल शादैस्तृणैर्हरिततलमिव

श्यामलमङ्ग यस्य तम् । पुष्पकिञ्जल्कजालै कुसुमकेसरसमूहै । पुलकिता सजातपुलका दन्तुरा वनमाला वैजयन्ती यस्य तम् । पुण्डरीकायताक्ष पुण्डरीकदललोचनम् । पुरुष भगवन्तम् । निदध्यु ददृशु । निपूर्वो ध्यायो दर्शनार्थ । एभिर्विशेषणै पुरुषस्याचलरूपत्वमपि गम्यते । अशरणानामावासकदमूलफलप्रदानादिना शरणम् शादवत्तया श्यामलाङ्गम्, पुष्पकिञ्जल्कजालै पुलकितकाननपङ्क्तिम्, पुण्डरीकैरेव शोभमान पुरुष निदध्युरिति ॥ १०९ ॥

**शतमखमणिशैलः स्यादसौ देवतात्मा**
**शरदि समुदितं वा तोयकालस्य तोकम् ।**
**चिरपरिचितपूर्वं चेतसां किं न भाग्यं**
**न किमिदमिति चिन्तां न व्यतीयाय नन्दः ॥**

**शतमखेति** । नन्द । असौ परिदृश्यमान पुरुष । देवतात्मा देवतारूप । शतमखमणिशैल स्यात् इन्द्रनीलरत्नाचलो भवेत् । अथवा शरदि समुदित तोयकालस्य तोकम् अपत्य स्यादित्यनुषङ्ग । वर्षाविर्भावानन्तर तदपत्योदयौचित्यादिति भाव । 'अपत्य तोक तयो समे' इत्यमर । चिरपरिचितपूर्व पूर्व बहुकालेन परिचितम् । महता कालेन परिणतमिति यावत् । 'सुप्सुपा' इति समास । एवभूत चेतसा भाग्यम् । कि न इद परिदृश्यमान वस्तु कि न भवति । श्यामत्वकान्तिमत्त्वानन्दकरत्वादिगुणेन बहुभि प्रकारैरुत्प्रेक्षितु शक्यते । तेषा मध्ये वस्तुनकिमिद स्यादिति चिन्ता न व्यतीयाय नातिलङ्घितवान् ॥ ११० ॥

**आद्यं किमेतदधिदैवतमद्भुताना-**
**माकालिकं फलमुतैकमिदं शुभानाम् ।**

एकीभवन्निधिरसौ किमभीप्सिताना-
मित्यन्वभावि सविधोपगतैः स देवः ॥ १११ ॥

आद्यमिति। स देवः। सविधोपगतैः समीप प्राप्तैः कर्तृभिः। एतत् अद्भुतानाम् आश्चर्याणाम्। आद्यं मुख्यम्। अधिदैवत किम्। उत अथ वा। इदं शुभानां सुकृतानाम्। एकम् अद्वितीयम्। आकालिक समान-कालाद्यन्त क्षणिकं फलं किम्, सर्वेषां सुकृतानां यद्येकमेव फलं स्यात्त-दपि क्षणमात्रस्थायि तदा तत्सर्वोत्तरं भवतीति भावः। 'आकालिकडा-द्यन्तवचने' इति सूत्रेण आद्यन्तविशेषणस्य समानकालशब्दस्य आकाल आदेशः इकच्प्रत्ययश्च निपातितः। अतश्च समानकालावाद्यन्तावस्येति विग्रहे आकालिकशब्दः साधु'। ईप्सितानाम् एकीभवन् निधिः सर्वाभिल-षितसमुदायः किम्। इति अभावि अनुभूतः, इत्थ वितर्कपूर्वं दृष्ट इत्यर्थः। एतदिदशब्दयोः तत्तद्विधेयापेक्षया नपुंसकत्वम् ॥ १११ ॥

पीतांशुके पृथुलबाहुभुजान्तराले
मेघाभिजन्मनि मिथः प्रतिबिम्बबुद्ध्या।
धन्यानि गोपनयनानि तदान्वभूव-
न्कृष्णे च तत्र च कियन्ति गतागतानि ॥११२॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु यादवाभ्युदये महाकाव्ये
षष्ठः सर्गः।

**पीतांशुक इति** । तदा । धन्यानि सुकृतीनि । गोपानां नयनानि । पीतांशुके पीतवर्णपरिधाने । बाहू च भुजान्तरालं च बाहुभुजान्तरालम् । पृथुल बाहुभुजान्तरालं यस्य तस्मिन् । मेघाभिजन्मनि मेघ इवाभिजाते । कृष्णे तत्र देवे च । मिथः प्रतिबिम्बबुद्ध्या तस्यायं प्रतिबिम्बः एतस्य स प्रतिबिम्ब इति परस्परप्रतिबिम्बत्वसंदेहवत्या बुद्ध्या । कियन्ति गतागतानि कतिचन गमनागमनानि अन्वभूवन् । अतिसारूप्येण विस्मयात्किंचित्कालविपर्ययेण तौ दृष्ट्वा हृष्टानि स्थितानीत्यर्थः ॥ ११२ ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजिश्रीरङ्ग-
राजाध्वरिवरसूनुना अप्पय्यदीक्षितेन विरचिते
यादवाभ्युदयव्याख्याने
**षष्ठः सर्गः ।**

## सप्तमः सर्गः ॥

व्रजौकसो विस्मयमन्थराक्षा
बालार्कवर्णं वसनं वसानम् ।
श्यामं युवानं शतपत्रनेत्रं
शैलोदितं देवमथोपसेदुः ॥ १ ॥

**व्रजौकस इति** । अथ शैलशृङ्गे देवस्य दर्शनानन्तरम् । विस्मयमन्थराक्षाः अद्भुताकारदर्शनजनितविस्मयस्तब्धलोचना. । व्रजौकसः गोपाः । बालार्कवर्णं वसनं वसानं बालार्कमिवारुणवर्णमंशुकं परिदधानम् । श्यामं युवानम् । शतपत्रनेत्रं नलिनोपमलोचनम् । शैलोदितं शैलाविर्भूतम् [illegible]त देवम् । उपसेदुः आराधनाय तत्समीपं जग्मुरित्यर्थः ॥ १ ॥

यमाहुरन्तर्बहिरप्यलक्ष्यं
योगेश्वरं योगिभिरेव दृश्यम् ।
तमद्रिशृङ्गे समुदीक्षमाणा
गोपं सतां गोपगणाः प्रणेमुः ॥ २ ॥

**यमिति** । अन्तर्बहिरप्यलक्ष्यं सर्वत्र व्याप्य स्थितत्वेऽप्यन्तर्हृदयादौ ततो बहिश्च लक्षयितुमशक्यम् । योगेश्वरं योगानामष्टाङ्गतया योगशास्त्रोपवर्णितानामाराध्यतया ईश्वरम्, स्वयं योगैरणिममहिमादिशालितया तेषामधिपतिमिति वा । यं कृष्णम् । योगिभिरेव योगप्रभावात् दृश्यं द्रष्टु

शक्यम् । आहुः वदन्ति । सतां गोपं गोप्तारम् । तम् । अद्रिशृङ्गे पर्वतशिखरे । समुदीक्षमाणाः । गोपगणाः । प्रणेमुः नमश्चक्रुः ॥ २ ॥

**स तानशेषान्सुधयेव दृष्ट्या**
**प्रहर्षयन्प्रत्ययितप्रसादः ।**
**सरामकृष्णान्सनकादिगम्यः**
**स्वामी सतां स्वागतमन्वयुङ्क्त ॥ ३ ॥**

**स इति** । सरामकृष्णान् रामकृष्णसहितान् । अशेषान् अखिलान् । तान् गोपालान् । सुधया अमृतेनेव । दृष्ट्या अवलोकनेन । प्रहर्षयन् प्रहृष्टान्कुर्वन् । अत एव प्रत्ययितप्रसादः प्रत्ययो विश्वासः, सोऽस्य सजात इति प्रत्ययितः । तारकादित्वादितच् । तथाभूतः प्रसादः अनुग्रहो यस्य सः । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । सतां स्वामी । सनकादिभिर्दिव्यपुरुषैरेव गम्यः उपस्पृहणीयः । सः वासुदेवः । स्वागतं कुशलम् । अन्वयुङ्क्त अपृच्छत् । 'स्वागतं कुशलम्' इति शब्दार्णवः । अनुपूर्वो युजिः प्रश्नार्थः ॥ ३ ॥

**शरत्प्रवृत्त्येव शशाङ्कभासो**
**वाचा हरेर्गोपधियः प्रसन्नाः ।**
**मिथोविमर्शैः कुमुदैरिवास-**
**न्मिषद्भिरासादितनिर्मलाशाः ॥ ४ ॥**

**शरत्प्रवृत्त्येति** । शरत्समयस्य प्रवृत्त्या । शशाङ्कभासः चन्द्रद्युतय इव । हरेः श्रीकृष्णस्य । वाचा । प्रसन्नाः संतुष्टाः, चन्द्रद्युतिपक्षे मेघकालुष्याभावान्निर्मलाः । गोपधियः गोपानां बुद्धयः । कुमुदैरिव । मिषद्भिः

विकसद्भिः। मिथोविमर्शैः रहसि विचारैः अयमस्माकमाराधनीयो नेन्द्र इत्येवरूपैः स्वगतविचारैरुपलक्षिताः सत्यः। इत्थंभूतलक्षणे तृतीया। 'मिथोऽन्योन्य रहस्यपि' इत्यमरः। आसादितनिर्मलाशाः प्राप्तनिर्विचिकित्साभिलाषाः। आसन्। कृष्णवाक्यादुत्पन्नो गिरिपूजाभिलाषः किंचिदिन्द्रादिलङ्घनानौचित्यशङ्कया कलुषः स्थितो भगवतोऽवलोकनाभाषणादिप्रसाददर्शनेन तत्रैव द्युतिरेकोदयान्निर्विचिकित्स आसीदित्यर्थः। चन्द्रद्युतिपक्षे आसादितनिर्मलाशाः प्राप्तावदातककुभ इति योज्यम्। **उपमालंकारः** ॥ ४ ॥

**विधानदक्षा विपिनाश्रयास्ते**
**तदन्यसंराधनवीतसङ्गाः।**
**तमर्चयामासुरदीनसत्त्वाः**
**संप्रीणनैः शक्रमखोपनीतैः ॥ ५ ॥**

**विधानदक्षा इति**। विधानदक्षाः कृत्येषु चतुराः। अदीनसत्त्वाः उदारचेतसः। ते। विपिनाश्रयाः अरण्यौकसो गोपाः। तदन्यसंराधनवीतसङ्गाः तदन्याराधनेऽप्यपेतस्पृहाः सन्तः। शक्रमखोपनीतैः इन्द्रपूजामुद्दिश्य समाहृतैः। संप्रीणनैः सम्प्रीतिसाधनैः पूजाद्रव्यैर्गन्धपुष्पादिभिः। तं पर्वताग्रस्थितं श्रियः पतिम्। अर्चयामासुः पूजयन्ति स्म ॥ ५ ॥

**अनन्ययोगादयजन्त चैनं**
**कृष्णेन तेनैव कृतानुचाराः।**
**समेघकैलासनिभैरसंख्यैः**
**सव्यञ्जनैः सादरमन्नकूटैः ॥ ६ ॥**

**अनन्ययोगादिति**। अनन्यानामन्यनिरपेक्षाणां प्रपन्नानां योगो

भगवत्प्रीणनोपायः अन्यवैमुख्यरूपः । 'योगः संनहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । तस्मात् तमवलम्ब्येत्यर्थः । ल्यब्लोपे पञ्चमी । एन देव यष्टव्यम् । तेन रूपेण कृष्णेन कृतानुचाराः यष्टव्यकोटिनिविष्टेन सता कृतानुसरणास्ते । सव्यञ्जनैः व्यञ्जनसहितैः । समेघकैलासनिभैः उपस्थितमेघेन कैलासेन सदृशैः । अन्नकूटैः अन्नसमूहैः । सादरम् । अयजन्त च । पूर्वश्लोकगतेन पुष्पाद्यर्चनेन समुच्चयार्थश्चकारः ॥ ६ ॥

**निर्धारितार्थेषु निजोपदेशा-**
**न्न्यस्तोपहारेषु महीधरार्थम् ।**
**अर्च्यत्वमाचार्यकमप्ययासी-**
**द्गोपेषु कृष्णो भुवनेषु गोप्ता ॥ ७ ॥**

**निर्धारितार्थेष्विति** । भुवनेषु लोकेषु । गोप्ता रक्षिता । कृष्णः । निजोपदेशात् स्वोपदेशात् । निर्धारितार्थेषु निश्चितकर्तव्यरूपविषयेषु, 'अर्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने' इति वैजयन्ती । महीधरार्थं महीधराय देयं यथा भवति तथा । न्यस्तोपहारेषु निहितपूजाद्रव्येषु । गोपेषु । अर्च्यत्वम् । आचार्यकम् आचार्यत्वमपि । 'योपधाद्गुरूपोत्तमाद्वुञ्' इति वुञ्प्रत्ययः । अयासीत् अगच्छत् । यातेर्लुङ् । स्वोपदेशात्तदाराधने प्रवृत्ता इति तेषामाचार्य आसीत् । स्वयमेव शैलपुरुष इत्युक्त्वा-नित्यासीदित्यर्थः । 'गोपेषु' 'भुवनेषु' इति च वैषयिकाधिकरणे सप्तमी ॥

**उपाहरन्यानि सभाजनार्थं**
**बलद्विषो वल्लववंशवृद्धाः ।**
**परेण पुंसा परिगृह्यमाणैः**
**प्राप्तं फलं पुष्पफलादिभिस्तैः ॥ ८ ॥**

**उपाहरन्निति** । वल्लववंशवृद्धाः गोपकुलवृद्धाः । वलद्विषः शक्रस्य । सभाजनार्थं तोषणार्थम् । यानि पुष्पफलादीनि । उपाहरन् । तैः । पुष्पफलादिभिः । परेण पुंसा भगवता । परिगृह्यमाणैः सद्भिः । फल जन्मसाफल्यम् । प्राप्तं लब्धम् । भगवदुपभुक्तपुष्पफलादिकानां वृक्षादीनामपि सद्गत्यवश्यभावादिति भावः ॥ ८ ॥

मृत्यूपसिक्तैर्भुवनैरशेषै-
रनन्यदत्तैरपि हव्यकव्यैः ।
अलब्धपूर्वामभजत्तदानीं
गोपाहृतैः प्रीतिमशेषगोप्ता ॥ ९ ॥

**मृत्यूपसिक्तैरिति** । अशेषगोप्ता सर्वेषां रक्षको देवः । तदानीम् । मृत्यूपसिक्तैः मृत्युः प्राणिनां जीवनापहरणे अधिकृता देवता, तया स्वादुताधानाय दध्यादिनेवोपसिक्तैः । अशेषैः । भुवनैः ओदनस्थानीयैः प्रलयेषु भुज्यमानैः । अनन्यदत्तैः एकान्तिभिः स्वाराधनबुद्ध्या दत्तैः । हव्यकव्यैः दैवपित्र्यैरन्नैरपि । अलब्धपूर्वां पूर्वमलब्धाम् । प्रीतिम् । गोपाहृतैः गोपानीतैरुपहारैः । अभजत् । समक्षभोजनजनितेन तेषां श्रद्धातिशयेन स्वतस्तेषु कृपातिशयेन च तद्दत्तैर्महीयसी प्रीतिरासीदित्यर्थः । 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' इति कठवल्लीमन्त्रे ब्रह्मक्षत्रोपलक्षितं चराचरात्मकमखिल प्रपञ्च प्रलयेषूपसेचनमृत्युमपि गृहीत्वा ग्रसते देव इति प्रतिपादितम् । अयमर्थः 'मृत्यूपसिक्तैर्भुवनैरशेषैः' इति निर्धारितः ॥ ९ ॥

विधिप्रयुक्ते हविषि प्रभूते
संभुज्यमाने हरिणा समक्षम् ।

अनागमश्रान्तधियोऽपि तत्र
श्रद्धामविन्दन्त समग्रतोषाः ॥ १० ॥

**विधीति**। विधिना प्रयुक्ते निवेदिते । प्रभूते बहुले । हविषि । हरिणा। समक्षम् । संभुज्यमाने सति। अनागमश्रान्तधियोऽपि, आगमेषु हव्यकव्यानां देवताप्रीत्यर्थप्रतिपादकेषु मन्त्रार्थवादेषु परिश्रमरहिता धीर्येषां ते, भूतार्थवादत्वनिर्णायकन्यायपरिशीलनविधुरबुद्धयोऽपि । समग्रतोषाः स्वस्वकृतक्रियमाणकरिष्यमाणश्राद्धादिकर्माण्यप्येवं स्वस्वोद्देश्यपित्रादिप्रीणनानि भवन्तीति नितरां हृष्टाः सन्तः । तत्र हव्यकव्यानि देवादयो भुञ्जत इत्यस्मिन्विषये । श्रद्धां विश्वासम् । अविन्दन्त लेभिरे । तावति महत्यन्नकूटे प्रत्यक्ष देवेन भुज्यमाने कस्य विश्वासो न भवेदिति भावः ॥

अमृष्यमाणो विहतां स्वपूजा-
मक्ष्णां सहस्रेण तदा महेन्द्रः ।
अनेहसं रक्तशिलीन्ध्रजालै-
राकालिकैरञ्चितमन्वकार्षीत् ॥ ११ ॥

**अमृष्यमाण इति**। तदा गिरिपूजासमये । विहतां स्वपूजाम् अमृष्यमाणः, स्वपूजाविघातमसहमानः । महेन्द्रः । अक्ष्णां सहस्रेण, कोपारुणेनेति भावः । आकालिकैः समानकालाद्यन्तैः, क्षणिकैरिति यावत् । 'आकालिकडाद्यन्तवचने' इति सूत्रेणाद्यन्तविशेषणतया समानकालशब्दस्य आकालादेशः इकट्प्रत्ययश्च निपातितः। रक्तशिलीन्ध्रजालैः अरुणकदलीपुष्पनिवहैः करणैः । 'कदल्यां च शिलीन्ध्रः स्यात्' इति शब्दार्णवे । अञ्चितं पूजितं मनोहरमिति यावत् । अनेहसं कालं वर्षासमयम् । तत्रैव शिलीन्ध्राणां विजृम्भणात् । अन्वकार्षीत् अनुकृतवान् । तदा क्षणं

गोपकुलकोपारुणलोचनसहस्रः शक्रः क्षणिकैररुणकदलीपुष्पैः सर्वतो व्याप्तो वर्षासमय इव स्थित इत्यर्थः ॥ ११ ॥

अवञ्चितान्यूनपयःप्रदाना-
नाराधकान्कालमियन्तमिन्द्रः ।
आहारकर्षादभिहन्तुमैच्छ-
त्कृतानभिज्ञेषु किमानृशंस्यम् ॥ १२ ॥

**अवञ्चितेति** । इन्द्रः । अवञ्चितान्यूनपयःप्रदानान् । इयन्तं कालम् अत्यन्तसंयोगे द्वितीया । आराधकान् पूजकान्गोपान् । आहारस्य । कर्षात् स्वस्मादन्यत्र करणात् । अभिहन्तुमैच्छत् । ननु स्वस्मिन्प्रवणेषु परोपदेशमात्रक्षुभितहृदयेषु नैव जिघांसा युक्तेत्यत आह— कृतेति । कृतानभिज्ञेषु । किमानृशंस्यम् नास्त्येवानृशंस्यमित्यर्थः । कृतघ्ना उपकारकारिणामपि क्रूरा एव भवन्तीति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १२ ॥

अथाजुहाव प्रतिघानुषङ्गा-
द्घोराशयो घोषविमर्दकाङ्क्षी ।
समेष्यतां संभवमर्णवानां
संवर्तकं नाम गणं घनानाम् ॥ १३ ॥

**अथेति** । अथ जिघांसानन्तरम् । प्रतिघानुषङ्गात् कोपानुवर्तनात् । घोराशयः क्रूरचित्तः स इन्द्रः । घोषविमर्दकाङ्क्षी आभीरग्रामस्य विमर्दं काङ्क्षमाणः सन् । समेष्यतां युगान्ते परस्परं सगमं प्राप्स्यताम् । अर्णवानाम् । संभवम् उत्पादकम् । युगान्ते महाजलौघवृष्ट्या चतुरकूपा-

रसंयोजकमित्यर्थः । सवर्तक नाम सवर्तक इति प्रसिद्धम् । घनानां गणम् । आजुहाव आहूतवान् ॥ १३ ॥

**प्रदीपितान्कोपहुताशभूम्ना**
**पीतोदधीन्वारिधरायुधौघान् ।**
**मरुद्भुजेन त्वरितं मरुत्वा-**
**न्प्रायुङ्क्त घोषाभिमुखं सघोषान् ॥ १४ ॥**

**प्रदीपितानिति** । मरुत्वान् इन्द्रः । कोप एव हुताशनः, तस्य भूम्ना बाहुल्येन । प्रदीपितान् प्रज्वलितान् । स्वामिनः कोपातिशय दृष्ट्वा घोषोपमर्दाय संनद्धानिति यावत् । पीतोदधीन् महावृष्टये पीतसमुद्रान् । सघोषान् गर्जितघोषेण सहितान् । वारिधरा मेघा एवायुधानि तेषामोघान्समूहान् । मरुदेव भुजस्तेन । त्वरितं शीघ्रम् । घोषाभिमुखम् आभीरग्रामस्याभिमुख यथा भवति तथा । प्रायुङ्क्त । यथा वीरः सम्यगग्नौ निष्टप्तांस्तदनु निपीतजलान्कम्पेन सघोषानायुधौघान्भुजेन शत्रुमुद्दिश्य प्रेरयति तद्वदिति भावः । सघोषानिति सामान्यधर्मोपादानाद्वारिधरायुधौघानित्यत्र रूपकसमासः । तदनुरोधात्कोपहुताशनेनेत्यादावपि रूपकसमास इति **सावयवरूपकालंकारः** ॥ १४ ॥

**प्रकल्पयन्तः परिवेषचक्रं**
**बृन्दावने विह्वलगोपबृन्दे ।**
**समीरनुन्नाः सहसा पयोदाः**
**शक्रस्य ते शासनमन्वतिष्ठन् ॥ १५ ॥**

**प्रकल्पयन्त इति** । समीरनुन्नाः मरुता प्रेरिताः । ते पयोदाः ।

विह्वलगोपवृन्दे अकाले प्रलयमेघालिदर्शनाद्भयविक्लबगोपकुले । बृन्दावने । परिवेषचक्र प्रकल्पयन्तः परिवेषमण्डलं संपादयन्तः चक्राकारेणावृण्वन्तः । शक्रस्य शासन महान्तृष्टया घोषोपमर्दरूपम् । अन्वतिष्ठन् अनुतिष्ठन्ति स्म ॥ १५ ॥

**तटित्सहस्रेण विदीप्तनेत्रः**
**समेतवज्रो धृतचित्रचापः ।**
**अतर्क्यतेन्द्रः स्वयमभ्रवाहः**
**कालात्मना भूमिकयेव खेलन् ॥ १६ ॥**

**तटिदिति** । इन्द्र एव । तटितां सहस्रेण । विदीप्तनेत्रः कोपज्वलितनेत्रः । समेतवज्रः समेतं वज्र निर्घातमेवायुध येन स तथोक्तः । 'निर्घातमशनिर्वज्रम्' इति धनंजयः । धृतचित्रचापः धृतनानावर्णकोदण्डः । अभ्रवाहः मेघवाहनश्च सन् । कालात्मना भूमिकया कालात्ममूर्तिपरिग्रहेण । 'भूमिका रचनायां स्यान्मूर्त्यन्तरपरिग्रहे' इति विश्वः । खेलन् क्रीडन् । अतर्क्यत उत्प्रैक्ष्यत । मेघानां संनाहं तत्र तटितामुन्मेषं वज्रचापादि दृष्ट्वा स्वयमिन्द्र एव कोपप्रज्वलितनेत्र. धृतवज्रचापः मेघवाहनमारुह्य संहारकालवेषरूपेण खेलतीति जनैरुत्प्रेक्षित इत्यर्थः । तत्र तडिन्नेत्रादिनिमित्तेन गोपान्संजिहीर्षोरिन्द्रस्य मेघेष्ववस्थानमुत्प्रेक्ष्यत इति **स्वरूपोत्प्रेक्षालंकारः** । सा च तडिन्नेत्रत्वरूपणेन समेतवज्र इत्यशनिवज्रयोः श्लेषेण चोत्थापितेति **संकरः** ॥ १६ ॥

**असूयता वज्रभृता प्रयुक्ता-**
**माकालिकीं प्रावृषमादिदेवः ।**

आशानिरोधं जगतां दिशन्तीं
निरोद्धुमैच्छन्निजया न शक्त्या ॥ १७ ॥

ननु पूर्णशक्तौ भगवति गोपानां गोप्तरि जाग्रति कथमेषां वृष्टिरूपा शक्रप्रयुक्ता विपदुत्थितेत्यत आह— **असूयतेति** । आदिदेवः कृष्णः असूयता असूयां कुर्वता, गोपैः कृतां गिरिपूजामसहमानेनेति यावत् । असूयाशब्दात्कण्ड्वादियगन्ताल्लटः शत्रादेशः । वज्रभृता शक्रेण । प्रयुक्ताम् । जगतां लोकानाम् । आशानिरोधं दिशामन्धकारेण निरोधम् । दिशन्तीं प्रयच्छन्तीम् । आकालिकीम् अकाले स्वकालादन्यस्मिञ्शरत्काले भवाम् । कालशब्दस्य कालसामान्यवाचिनस्तद्विशेषे प्रावृषि लक्षणायां तत्र तदन्यार्थकनञ्समासे च सति अकालशब्दः शरत्कालपरः । 'कालाट्ठञ्' इति शैषिकः प्रत्ययः । प्रावृष मेघसंनाहम् । प्रावृट्छब्देन वर्षाकालवाचिना तत्कालोचितमेघोन्नतिर्लक्ष्यते । तां निजया शक्त्या निरोद्धुं नैच्छत्, किंतु शैलार्चनात्प्रसक्तामापदं शैलेनैवापाकरिष्यन्कंचित्कालं मेघसंनाहं वीक्ष्यास्तेति भावः ॥ १७ ॥

वियत्पयोधिं परितः पयोदै
र्वेलातमालैरिव वर्धमानैः ।
जिघांसता गोपगणान्मघोना
च्छन्नेन तस्थे मृगयार्थिनेव ॥ १८ ॥

**वियत्पयोधिमिति** । गोपगणान् । जिघांसता हन्तुमिच्छता । मघोना इन्द्रेण । मृगयार्थिना मृगयाविहारपरेणेव । वियत् गगन पयोधिरिव त परितः समन्ततः । वेलातमालैरिव वर्धमानैः । पयोदैः । छन्नेन सता ।

तस्थे स्थीयते स्म । यथा मृगयाविहारपरः पयोधिवेलायां प्ररूढैस्तमालवृक्षैश्छन्नो मृगाणां निर्गमनं प्रतीक्ष्य तिष्ठति एवमिति भावः । अत्रेन्द्रादीनां मृगव्याद्युपमारोपाद्वोपानां मृगोपमा प्रतीयत इत्येकदेशवृत्त्युपमालंकारः ॥ १८ ॥

**अदृश्यरूपः स तदा मरुत्वा-**
**नम्भोमुचामन्तरतोऽवतस्थे ।**
**अपारयन्द्रष्टुमिव त्रिधाम्नो**
**दीप्तिं दिवाभीत इवातिसूर्याम् ॥ १९ ॥**

**अदृश्यरूप इति** । तदा वृष्टिसमये । मरुत्वान् इन्द्रः । दिवाभीत इव । अतिसूर्यां सूर्यातिशायिनीम् । त्रिधाम्नः कृष्णस्य । दीप्तिम् । द्रष्टुम् । अपारयन् अशक्नुवन् । यथा दिवाभीत उलूकः सूर्यदीप्तिमपि द्रष्टुमशक्नुवंस्तदतिशायिदीप्तिं द्रष्टुं न कथमपि शक्नोति तद्वदशक्नुवन्निवेत्युपमानुप्राणितोत्प्रेक्षा । अम्भोमुचाम् मेघानाम् । अन्तरतः अभ्यन्तरे । अदृश्यरूपः सन् । अवतस्थे । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् ॥ १९ ॥

**अमर्षवेगादचमत्क्रियोत्था-**
**ज्जिघृक्षता वज्रमकुण्ठवीर्यम् ।**
**अलक्षि जीमूतरथे मघोना**
**मोघक्रियो मुक्त इवेन्द्रचापः ॥ २० ॥**

**अमर्षेति** । इन्द्रचापः शक्रधनुः । अचमत्क्रियोत्थात् धनुषि रिपुसहरणसामर्थ्यरूपचमत्काराभावेनात्थितात् । अमर्षवेगात् । कोपवेगात् । अकुण्ठवीर्यम् अमोघशक्तिम् । वज्रम् । जिघृक्षता ग्रहीतुमिच्छता । मघोना

शक्रेण । मोघक्रियः निरर्थकव्यापार इति । मुक्त इव । जीमूतरथे मेघ एव रथे। अलक्षि लक्षितः। योद्धारो हि गृहीतमायुध कुण्ठं चेदन्यजिघृक्षन्तः, तत् रथे त्यजन्ति । तथा त्यक्त इवालक्ष्यतेत्यर्थः । **उत्प्रेक्षालंकारः** ॥

**सुतीव्रहुंकारभृतो निनादैः**
**सौदामनीदर्शिततर्जनीकाः ।**
**मरुत्वदाज्ञाविमुखानभीक्ष्णं**
**निर्भर्त्सयामासुरिवाम्बुवाहाः ॥ २१ ॥**

**सुतीव्रेति** । निनादैः गर्जितरूपैः । सुतीव्रहुकारभृतः उग्रहुकारभृतः । सौदामिनी तटिदेव दर्शिता तर्जनी प्रदेशनी यैस्ते तथोक्तास्ते । 'नद्यृतश्च' इति कप्रत्ययः । अम्बुवाहाः मेघाः । मरुत्वदाज्ञाविमुखान् इन्द्राज्ञामगणयतः । अभीक्ष्ण पुनः पुनः । निर्भर्त्सयामासुरिव तर्जयामासुरिवेत्युत्प्रेक्षा । सा च गर्जिते हुकारत्वरूपकेण सौदामन्यां तर्जनीत्वरूपकेण चोत्थापितेति **संकरः** ॥ २१ ॥

**क्षणप्रभास्तत्क्षणमन्तरिक्षे**
**प्रायेण गोपान्ग्रसितुं प्रवृत्ताः ।**
**बभासिरे वासवरोषवह्ने-**
**र्ज्वालाग्रजिह्वा इव जातलौल्याः ॥ २२ ॥**

**क्षणप्रभा इति** । तत्क्षणं स एव क्षणो यथा भवति तथा । तस्मिन्नेव क्षण इति यावत् । अन्तरिक्षे । जातलौल्याः । जिह्वापक्षे । उत्पन्नतृष्णाः । 'लोलश्चलसतृष्णयोः' इत्यमरः । क्षणप्रभाः विद्युतः । प्रायेण । गोपान् । ग्रसितु कबलयितुम् । प्रवृत्ताः । वासवरोषवह्नेः शक्रकोपाग्नेः । ज्वालाग्र-

रूपा जिह्वा इव । बभासिरे भासन्ते स्म । अत्र प्रायेण गोपान्ग्रसितु प्रवृत्ता इति प्रायःशब्देन फलोत्प्रेक्षा जातलौल्या इति श्लेष इति तदुभयानुप्राणिता ज्वालाग्रजिह्वा इवेति **स्वरूपोत्प्रेक्षालंकारः** ॥ २२ ॥

**किमन्तरिक्षेण घनीबभूवे**
**किमुत्थितं ध्वान्तमहीन्द्रलोकात् ।**
**मूलं किमेतत्प्रलयार्णवाना-**
**मितीव मेने मलिनाभ्रमाला ॥ २३ ॥**

**किमिति** । अन्तरिक्षेण । घनीबभूवे कठिनीबभूवे किम् । भावे लिट् । अन्तरिक्षमेवेत्थ कठिनीभूतं किमित्यर्थः । अहीन्द्रलोकात् पातालात् । ध्वान्तमुत्थितं किम् । एतत् दृश्यमानम् । प्रलयार्णवानां प्रलये एकोदकीभवतां सागराणाम् । मूलं कारणं किम् । इतीव । मलिनाभ्रमाला कालमेघपङ्क्तिः । मेने । कर्मणि लिट् । चिन्तितेत्यर्थः । जनैरिति शेषः । मेघानां व्यापित्वमतिकार्ष्ण्यं महावृष्टिप्रारम्भसनाह च दृष्ट्वा जनैरुक्तप्रकारत्रयेणोत्प्रेक्षितमित्यर्थः । इतीवेत्यत्र इवशब्दो वाक्यालंकारे इत्यर्थे एव ॥ २३ ॥

**व्रजोपमर्दे समयो विधास्य-**
**न्बभार नम्रेण पयोदमूर्ध्ना ।**
**महीयसीं वासवचापलेखां**
**मायाप्रदिष्टामिव माल्यशेषाम् ॥ २४ ॥**

**व्रजोपमर्दमिति** । व्रजोपमर्दं गोकुलस्य पीडाम् । विधास्यन् करिष्यन् । समयः कालः । नम्रेण जलभरावनतेन । पयोदेनैव मूर्ध्ना । महीयसीम् अतिशयेन महतीम् । वासवचापलेखाम् इन्द्रधनुर्लेखाम् । मायाप्रदिष्टां

व्रजं पीडयितु समय नियोजयन्त्या भगवन्मायया दत्ताम्। माल्यशेषा माल्यरूपं निर्माल्यमिव। बभार भरति स्म। प्रभुभिः क्वचित्कार्ये नियुज्य प्रस्थाप्यमानाः पुरुषास्तत्समये प्रभुदत्त तद्भृतमाल्यादि प्रश्रयावनतेन मूर्ध्ना परिगृह्य प्रतिष्ठन्त इति भावः। तथा कुमारसंभवेऽपि 'तथेति शेषामिव भर्तुराज्ञामादाय मूर्ध्ना मदनः प्रतस्थे' इति ॥ २४ ॥

**कठोरगर्जापटहप्रणादः**
**करप्रसूनैरवकीर्य पृथ्वीम्।**
**क्षणप्रभाभिर्घटिताङ्गहारः**
**कालः प्रतुष्टाव युगान्तनृत्तम् ॥ २५ ॥**

**कठोरेति।** कठोरा क्रूरा गर्जा गर्जितम्। 'गुरोश्च हलः' इत्यप्रत्ययः। सैव पटहप्रणादः आनकध्वनिर्यस्येति तथोक्तः। काल समयः। करा घनोपला एव प्रसूनानि। 'करो घनोपले हस्ते शुण्डायां किरणे बलौ' इति-रत्नमाला। तैः, पृथ्वीम्। अवनीम्। अवकीर्य। रङ्गस्थलमिवेति भाव.। क्षण-प्रभाभिः विद्युद्भिः। घटिताङ्गहारः कृताङ्गविक्षेपः सन्। 'अङ्गहारोऽङ्ग-विक्षेपः' इत्यमरः। युगान्तनृत्त प्रलयकालनृत्तम्। प्रतुष्टाव प्रस्तुतवान्। विद्युद्गर्जितकरकानिपातनानन्तरभाविनी महावृष्टिरेव कालस्य युगान्तनृ-त्तत्वेनाध्यवसीयत **इत्यतिशयोक्तिः**। सा च गर्जादिषु पटहप्रणादत्वादि-रूपकानुप्राणितेति **संकरः** ॥ २५ ॥

**प्रणुद्यमानाः प्रबलैः समीरै-**
**राप्लावयामासुरमन्दघोषाः।**
**महीमपर्यायनिपीतमुक्तै-**
**रौदन्वतैरम्बुभिरम्बुवाहाः ॥ २६ ॥**

**प्रणुद्यमाना इति** । प्रबलैः समीरैः महावातैः। प्रणुद्यमानाः प्रेर्यमाणाः। अमन्दघोषाः कठोरस्तनितशब्दाः। अम्बुवाहाः। अपर्यायनिपीतमुक्तैः युगपन्निपीय युगपदेव मुक्तैः। औदन्वतैः उदन्वत्संबन्धिभिः। अम्बुभिः समुद्रजलैः। महीम्। आप्लावयामासुः सेचयामासुः ॥ २६ ॥

**अङ्गाररूक्षस्तनयित्नुपूर्णा-**
**दैरम्मदे तेजसि तप्यमानात् ।**
**विहायसो नूनमभूद्विलीना-**
**द्विष्वङ्मुखी वृष्टिरवारणीया ॥ २७ ॥**

**अङ्गारेति** । अङ्गारा. प्रशान्तार्चिषो दग्धकाष्ठखण्डाः। 'अङ्गारोऽस्त्री प्रशान्तार्चिः' इति यादवः। तैरिव रूक्षैः परुषैः स्तनयित्नुभिः मेघैः पूर्णात् व्याप्तात्। ऐरम्मदे इरम्मदो मेघाग्निः। 'मेघज्योतिरिरम्मदः' इत्यमरः। तदीय तेजसि। तप्यमानात्। अत एव विलीनात् उपर्यङ्गाराच्छादितानलज्वालातप्यमानसीसादिवत् द्रुतात्। विहायसः गगनात्। विष्वङ्मुखी सार्वत्रिकी। अवारणीया। वृष्टिः। अभूत्। नूनमित्युत्प्रेक्षायाम् ॥ २७ ॥

**प्रदीप्तविद्युद्गणदुर्निरीक्षा-**
**न्सोढुं व्रजाः श्रोत्रविघातिघोषान् ।**
**न शेकुरावर्जितशक्रचापा-**
**न्धाराशरश्रेणिमुचः पयोदान् ॥ २८ ॥**

**प्रदीप्तेति** । व्रजाः व्रजस्था जनाः। 'मञ्चाः क्रोशन्ति' इतिवल्लक्षणा। प्रदीप्तविद्युद्गणदुर्निरीक्षान् प्रस्फुरितेन तडिन्निकरेण दुरालोकान्। श्रोत्रविघातिघोषान् श्रवणोपघातकगर्जितान्। आवर्जितः शक्रचापो येषु

तान् । धाराशरश्रेणिमुचः धारा एव शरास्तेषां पङ्क्तिं मुञ्चतः । पयोदान्, खड्गाद्यायुधगुणदुर्निरीक्षान्महाट्टहासकृतश्चापमवनमय्य शरान्मुञ्चतो योधानिवेति भावः । सोढुम् । न शेकुः शक्नुवन्ति स्म ॥ २८ ॥

**सहुंकृताः सामिनिमीलिताक्षा**
**दीर्घोरुशृङ्गा दरभुग्नवक्त्राः ।**
**प्रत्यग्रहीषुः प्रतिपन्नरोषा**
**धाराः क्षणं धैर्यभृतो महोक्षाः ॥ २९ ॥**

**सहुंकृता इति** । हुंकृतेन सहिताः । सामिनिमीलिताक्षाः अर्धनिमीलितनयनाः । दीर्घोरुशृङ्गाः उद्दीर्घस्थूलविषाणाः । तद्दैर्घ्यनिमित्तं दरभुग्नवक्त्राः किंचिदवनतमुखाः, मुखोन्नमनेन तिर्यग्भूतानि शृङ्गाणि तन्नमनेन प्रगुणतया स्फुटदैर्घ्याणि भवन्तीति भावः । प्रतिपन्नरोषाः प्राप्तकोपाः । महोक्षाः महान्त उक्षाणः पुङ्गवाः । 'अचतुरविचतुर..' इत्यादिना समासान्तनिपातः । क्षणम् । धैर्यभृतः सन्तः । धाराः वृष्ट्यासारान् । प्रत्यगृहीषुः प्रतिगृह्णन्ति स्म । क्षणान्तरे तेषामप्यसह्या आसन्नित्यर्थः । अत्र पुंगवानां स्वभाववर्णनात्**स्वभावोक्तिरलंकारः** ॥ २९ ॥

**स्तनाहितस्वस्तिकबाहुबन्धा-**
**स्त्यानालकाः संनतवक्त्रपद्माः ।**
**विलग्नदेहा वसनैर्न्यषीद-**
**न्व्रजस्त्रियो वादितदन्तवीणाः ॥ ३० ॥**

**स्तनेति** । व्रजस्त्रियः गोप्यः । स्तनयोराहितस्वस्तिकः निहितहस्तविन्यासो बाहुबन्धो याभिस्ताः । स्त्यानालकाः जलसेकात्संहतकुन्तलाः ।

संनतवक्त्रपद्माः अवनतमुखकमलाः । वसनैः परिधानोत्तरीयरूपैः । विलग्नदेहाः जलार्द्रत्वात्सश्लिष्टशरीराः । वादितदन्तवीणाश्च सत्यः । शीतालुतया कम्पमानदन्तपङ्क्तिद्वयी दन्तवीणोच्यते तत्संघट्टनानुवृत्तिश्च तद्वादनत्वेनाध्यवसीयते । न्यषीदन् निषीदन्ति स्म । अत्रापि **स्वभावोक्तिरलंकारः** ॥ ३० ॥

**चलद्बलाकोल्बणशङ्खमाला**
**पयोधरव्यक्तिधरोर्मिमाला ।**
**प्रावृट्पुनः संववृतेऽतिघोरा**
**संवर्तसिन्धोरिव धर्मपत्नी ॥ ३१ ॥**

**चलदिति** । चलन्त्यो बलाका एव उल्बणाः स्फुटाः शङ्खमालाः यस्याः सा । पयोधरव्यक्तेः मेघाकृते धरा ऊर्मय एव हार यस्याः सा । अतिघोरा प्रावृट् । सवर्तसिन्धोः प्रलयार्णवस्य । धर्मपत्नीव प्रलयार्णवपूर्णोचिता नदीव । पुनः सववृते पुनरपि शरत्काले सवृत्ता । अत्र बलाकानां शङ्खरूपणेन पयोधरव्यक्तिधरोर्मीत्यपह्नुत्या चोत्थापिता प्रावृषो नदीत्वोत्प्रेक्षा, धर्मपत्नीति पुनस्तस्या एव स्त्रीत्वप्रतीतेः स्त्रीत्वोत्प्रेक्षा च । तदर्थमेवापह्नुतेरुपरि हारत्वरूपणम् । तत्र पक्षे पयोधरयोः स्तनयोर्व्यक्तिधरा स्फुटत्व बिभ्राणा ऊर्मिसदृशा हारा यस्या इति योज्यम् । शङ्खमाला च अस्थ्यादिरूपशङ्खपङ्क्तिः । अतिघोरत्वं संवर्तसिन्धोरतिभयकरत्वान्नायकानुसारेण भूतवेतालकापालिकादिस्त्रीवर्णन इवोपपन्नम् ॥ ३१ ॥

**गम्भीरगर्जापटहप्रणादं**
**प्रारब्धझञ्झानिलनादगीतम् ।**

**तडिद्भिरापादितताण्डवं त-**
**त्कालस्य संगीतमपूर्वमासीत् ॥ ३२ ॥**

**गम्भीरेति** । तत् तदा । गम्भीरा मनोज्ञा गर्जा गर्जितमेव पटह-प्रणादः आनकध्वनिर्यस्मिन् । प्रारब्ध उपक्रान्तः झञ्झानिलनादः सवृष्टि-वातशब्द एव गीतं यस्मिन् । 'झञ्झावातः सवृष्टिः स्यात्' इति यादवः । तडिद्भिः विद्युद्भिः। आपादितताण्डवं संपादितनृत्तम्। अपूर्वम् अतिपरुषतया लोकाप्रसिद्धम् । कालस्य गोकुलसंजिहीर्षया प्रवर्तमानस्य । संगीतं नृत्त-गीतवाद्यत्रयम् । आसीत् संपन्नमित्यर्थः ॥ ३२ ॥

**विद्युद्गुणैः संदितया समन्ता-**
**द्व्रजे मरुत्वान्मृगयामिवेच्छन् ।**
**समावृणोत्सान्द्रतमिस्रधाम्ना**
**मेघात्मना वागुरया वनाद्रीन् ॥ ३३ ॥**

**विद्युद्गुणैरिति** । मरुत्वान् इन्द्रः । व्रजे । मृगयाम् आखेटम् । इच्छन्निव । समन्तात् सर्वतः । तडिद्भिरेव गुणैः सूत्रैः । सदितया बद्धया । 'बद्धे सदानित मूतमुद्दित सदित सितम्' इत्यमरः । सपूर्वात् 'दो अव-खण्डने' इति धातोः क्तः । उपसर्गवशादर्थभेदः । सान्द्रतमिस्रधाम्ना गाढा-न्धकारत्विषा । मेघात्मना वागुरया मेघरूपया मृगबन्धिन्या । वनाद्रीन् वनानि पर्वतांश्च । समावृणोत् सम्यगावृणोति स्म ॥ ३३ ॥

**आसारधाराच्छुरितेन्द्रचापै-**
**र्मेघैर्दिशा माघवती चकाशे ।**

आमुक्तमुक्तागुणरत्नदामैः
सिन्धोरपत्यैरिव धीरनादैः ॥ ३४ ॥

**आसारेति**। माघवती मघवतः सबन्धिनी। 'मघवा बहुलम्' इति मघवन्शब्दस्य त्रादेशे सति ततः 'तस्येदम्' इत्यण्प्रत्ययः। 'टिड्ढाणञ्—' इति ङीप्। दिशा दिक्। आसारधाराच्छुरितेन्द्रचापैः वेगवृष्टिधारासंवृतशक्रचापैः। मेघैः। 'आसारः स्यात्प्रसरणे वेगवृष्टौ महाबले' इति वैजयन्ती। आमुक्तमुक्तागुणरत्नदामैः पिनद्धमौक्तिकहाररत्नसूत्रैः। 'आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत्' इत्यमरः। 'न पुंसि दाम सदानम्' इति दामन्शब्दस्य स्त्रीनपुंसकलिङ्गानुशासनात्स्त्रियाम् 'डाबुभाभ्यामन्यतरस्याम्' इति डाप्रत्यये सत्याकारान्तता। एवं तैः सिन्धोरपत्यैः समुद्रपोतैरिव चकाशे। धीरनादैरिति विशेषणमुपमानोपमेययोरप्यनुगामि। धारामौक्तिकगुणौ शक्रचापरत्नमालिके च बिम्बप्रतिबिम्बभावेन तयोर्व्यवस्थितविशेषणे। अत्र सिन्धुपोतरूपोपमानस्य लोकसिद्धत्वाभावादुत्प्रेक्षालंकारः ॥ ३४ ॥

हुंकारवन्तः स्तनितैरुदारैः
क्षणप्रभाकाञ्चनवेत्रभाजः।
पुरंदरस्येव पुरःसरास्ते
प्रचेरुरुत्सारितगोपवर्गाः ॥ ३५ ॥

**हुंकारवन्त इति**। उदारैर्महद्भिः। स्तनितैः गर्जितैः। हुंकारवन्तः। क्षणप्रभाकाञ्चनवेत्रभाजः विद्युत एव काञ्चनवेत्राणि धारयन्तः। ते मेघाः। पुरंदरस्य शक्रस्य। पुरःसराः अग्रेसराः सौविदल्ला इव। उत्सारितगोपवर्गाः निरस्तगोपगणाः सन्तः। प्रचेरुः प्रचरन्ति स्म। यथा राज्ञां पुरतः

पयोमुचां मेघानाम् । पङ्क्तिः । कृतान्तकोपेनोल्लसिताम् । अत एव विशेषेण अतिशयेन भीमां भयंकरीम् । कृपाणीं खड्गम् । विडम्बयामास अनुकरोति स्म । कृपाणशब्दो द्विलिङ्गः । स्त्रीत्वे गौरादित्वेन ङीष् ॥ ३७ ॥

पयोदभारैर्नमितं नभः किं
शेषाहिना भूमिरुत प्रणुन्ना ।
अदूरतः संपुटभावभाजो-
रासीत्तयोरन्तरमल्पशेषम् ॥ ३८ ॥

**पयोदभारैरिति** । नभः गगनम् । पयोदभारैः मेघजालैः लम्बमानैः । नमितं अवनत किम् । उत अथवा । शेषाहिना अनन्तेन । भूमिः । प्रणुन्ना उन्नमिता । एवमुत्प्रेक्षायां निमित्तमाह— अदूरतः संपुटभावभाजोः भूसंनिकृष्टमेघपटलच्छादनात्समीपत एव संपुटभावं भजमानयोः । तयोः नभोभूम्योः । अन्तरं मध्यम् । अल्पशेषं किंचिदवशेषम् । आसीत् ॥ ३८ ॥

प्रायःप्रकीर्णाशनिविष्फुलिङ्गै-
र्लोकास्तदा लोचनरोधमापुः ।
पयोदरूपेण विवर्तमानैः
पर्जन्यकोपानलधूमजालैः ॥ ३९ ॥

**प्राय इति** । तदा तस्मिन्समये । लोकाः प्रजाः । प्रायः बाहुल्येन प्रकीर्णा अशनयो वज्राण्येव विष्फुलिङ्गा विशिष्टाग्निकणा येषां तैः । 'त्रिषु स्फुलिङ्गोऽग्निकणः' इत्यमरः । पयोदरूपेण विवर्तमानैः मेघात्मना परिणममानैः । पर्जन्यकोपानलधूमजालैः शक्ररोषाग्निधूमसमूहैः । 'पर्ज-

न्यो गर्जदभ्रेऽभ्रध्वाने शक्रेऽभ्रयन्त्रके' इति वैजयन्ती । लोचनरोधम् आपुः नेत्रनिरोधं भेजुः । रूपकानुप्राणिता पयोदरूपेण विवर्तमानैरित्यपह्नुतिः ॥ ३९ ॥

**अलातकल्पाः करकास्त्रिलोकी-**
**मापूरयन्नद्भुतभीमरूपाः ।**
**युगान्तवात्यारभसावधूताः**
**संभूय तारा इव संपतन्त्यः ॥ ४० ॥**

**अलातकल्पा इति** । अलातकल्पाः उल्कोपमाः । 'अलातमुल्मुक ज्ञेयम्' इति हलायुधः । अद्भुतभीमरूपाः आश्चर्यभयंकराकृतयः । करकाः मेघशिलाः । युगान्तवात्यारभसावधूताः प्रलयविजृम्भितस्य मण्डलिवातस्य वेगेनोद्धताः । 'वात्या वातस्तु मण्डली' इति यादवः । पाशादित्वात्समूहार्थे यप्रत्ययः । अत एव, सभूय सपतन्त्यः युगपदेव समन्तात्पतन्त्यः । ताराः तारका इव । त्रिलोकीमापूरयन् ॥ ४० ॥

**चकास चञ्चत्करकास्थिमाला**
**कादम्बिनीकण्टकभीषणा द्यौः ।**
**वज्रौघनिष्पेषमहाट्टहासा**
**मूर्तिस्तदा मोहकरीव रौद्री ॥ ४१ ॥**

**चकासेति** । तदा । चञ्चत्करकास्थिमाला चञ्चन्त्यः चलाः करका वर्षोपला एव अस्थिमाला यस्याः सा । चञ्चिर्भौवादिको गत्यर्थो धातुः । कादम्बिनी मेघपङ्क्तिरेव कण्टकः क्रोधजो रोमहर्षः दन्तुराकारत्वात् , तेन भीषणा । वज्रौघानामशनिसमूहानां निष्पेषः संघट्टनजन्मा साटोपः शब्द

एव महानट्टहासो यस्याः सा । द्यौः । मोहकरी अतिभीमतया जनाना मूर्छावहा । रौद्री मूर्तिः संहाररुद्रमूर्तिरिव । चकास बभौ ॥ ४१ ॥

**शतह्रदाभिर्धृतहेमकक्ष्या**
**धाराधराः सेन्द्रधनुष्पताकाः ।**
**अदभ्रघोरध्वनयोऽनुचक्रुः**
**सप्तस्रुतां शक्रमतङ्गजानाम् ॥ ४२ ॥**

**शतह्रदाभिरिति** । शतह्रदाभिः विद्युद्भिः । धृतहेमकक्ष्याः । गजानामुदररज्जवो वरत्राख्याः कक्ष्याः । 'कक्ष्या कटे वरत्रायाम्' इति वैजयन्ती । सेन्द्रधनुष्पताकाः इन्द्रधनुषैव पताकया सहिताः । अदभ्रघोरध्वनय. बहुलभीमघोषाः । धाराधराः मेघाः । सप्तस्रुतां सप्तस्वपि मदस्थानेषु स्रवताम् । शक्रमतङ्गजानाम् । अनुचक्रुः अनुकुर्वन्ति स्म । 'न माषाणामश्नीयात्' इतिवत्सबन्धसामान्ये षष्ठी । विद्युदिन्द्रधनुर्वर्षधारायुक्ता मेघाः संनद्धस्य शक्रस्य हेमकक्ष्यापताकायुक्ता मदस्रुतः कुम्भिन इवादृश्यन्तेत्युत्प्रेक्षा । यद्यपि 'तस्य चानुकरोतीति शब्दा. सामान्यवाचकाः' इति दण्डिना अनुकरोतिशब्दस्योपमावाचित्वमुक्तम्, तथाप्यत्रौचित्यादुत्प्रेक्षायां पर्यवसानमिति उपमोपक्रमोत्प्रेक्षेयम् । 'करात्कटाभ्यां नेत्राभ्यां मेढ्राच्चापि मदस्रुतिः' इति मदस्थानानि । तत्र करात् शुण्डारन्ध्राभ्यामित्यर्थः ॥ ४२ ॥

**अहीन्द्रभोगप्रतिमाः पतन्त्यो**
**धारास्तदा घोरमरुत्प्रणुन्नाः ।**
**अभावयन्भीमपयोदनक्रं**
**व्योमार्णवं वीचिगणावकीर्णम् ॥ ४३ ॥**

**अहीन्द्रेति** । तदा । घोरमरुत्प्रणुन्नाः चण्डवातकम्पिताः । अहीन्द्रभोगप्रतिमाः शेषकायतुल्याः तथा स्थूलाः । पतन्त्यः । धाराः । भीमपयोदनक्र भीमाः पयोदा एव नक्राः कुम्भीरा यस्मिन् । 'कुम्भीरो नक्र उच्यते' इति हलायुधः । त व्योमार्णव गगनसागरम् । वीचिगणावकीर्णम् ऊर्मिभिः कीर्णम् । अभावयन् अकुर्वन् । ण्यन्तो भवतिः करोत्यर्थः । स्वयमेव तस्य वीचय इवासन्नित्यर्थः ॥ ४३ ॥

आसारदुर्लक्षतडित्प्रकाश-
मन्योन्यसंकीर्णहरिद्विभागम् ।
आसीदसह्यस्तनितं प्रजाना-
मभिन्ननक्तंदिवमन्तरिक्षम् ॥ ४४ ॥

**आसारेति** । आसारैर्धारासंपातैः दुर्लक्षा दुःखेन लक्षणीयाः तडित्प्रकाशा यस्मिंस्तत् । अन्योन्यसंकीर्णहरिद्विभागं परस्परसकीर्णप्राच्यादिदिग्विभागम्, गाढान्धकारकञ्चकिततया दुरधिगमदिग्विभागामिति यावत् । प्रजानां व्रजस्थजनानाम् । असह्यस्तनितम् असह्यगर्जितम् । अन्तरिक्षम् । अभिन्ननक्तंदिवम् अविशिष्टनिशादिवसम् । आसीत् । परस्परव्यावर्तकस्य रविशशाङ्कादिप्रकाशस्य लेशतोऽप्यभावादिति भावः ॥ ४४ ॥

तडित्स्वभावेन तमःप्रकृत्या
निर्ह्रादरूपेण जलात्मना च ।
विवर्तते विश्वमितीव गोपाः
प्रायो न चिन्तार्णवपारमापुः ॥ ४५ ॥

**तडिदिति** । गोपाः नन्दादयः । विश्वम् अखिलमपि वस्तुजातम् ।

तडित्स्वभावेन विद्युद्रूपेण । तमःप्रकृत्या अन्धकाररूपेण । निर्ह्रादरूपेण स्तनितरूपेण । जलात्मना जलरूपेण च । विवर्तत इव विपरिणमतीव । इति चिन्तार्णवस्य पारं परं तीरम् । प्रायः । नापुः, तडित्तमःस्तनितजलधारानैरन्तर्येण चिरानुवृत्त्या तथा तेषां दुस्तरा चिन्ता संभावनीयेत्युत्प्रेक्षा ॥

**प्रवर्तमानान्प्रतिसर्गक्लृप्तौ**
**पश्यन्घनान्पाशभृताप्यवार्यान् ।**
**अभीतिमुद्रामधुरेण गोपा-**
**नाश्वासयामास करेण शौरिः ॥ ४६ ॥**

**प्रवर्तमानानिति** । शौरिः कृष्णः । प्रतिसर्गक्लृप्तौ प्रलयसंपादने । 'प्रतिसर्गस्तु संहारः प्रलयः प्रतिसंचरः' इति वैजयन्ती । प्रवर्तमानान् । पाशभृता वरुणेन जलेशेनापि । अवार्यान् अनिवारणीयान् । घनान् । पश्यन्सन् । अभीतिमुद्रामधुरेण अभयमुद्रामनोहरेण । करेण । गोपान् । आश्वासयामास आश्वासयति स्म ॥ ४६ ॥

**यदर्चनादापदियं प्रसक्ता**
**तेनैव गोपालगणस्य गुप्तिम् ।**
**अरोचयत्कर्तुमशेषगोप्ता**
**रामेण संमन्त्र्य रथाङ्गपाणिः ॥ ४७ ॥**

**यदर्चनादिति** । अशेषगोप्ता निखिलपालकः । रथाङ्गपाणिः कृष्णः । रामेण बलदेवेन । संमन्त्र्य रहसि विचार्य । यदर्चनात् यस्य गोवर्धनस्यार्चनात् पूजनात् । इयम् । आपत् महावृष्टिरूपा विपत् । प्रसक्ता । तेनैव द्वारभूतेन । गोपालगणस्य । गुप्तिं रक्षाम् । कर्तुम् । अरोचयत् ऐच्छत् ॥

स लीलया मेरुमिव द्वितीयं
 गोवर्धनं गोपकुलप्रदीपः ।
नवप्ररूढं निहितैकहस्तो
 नागो नलस्तम्बमिवोज्जहार ॥ ४८ ॥

**स इति**। गोपकुलस्य प्रदीपवत्प्रकाशकः। सः कृष्णः। द्वितीय मेरुमिव स्थितम्। गोवर्धनम्। नागः गजः। नवं यथा तथा प्ररूढ अरूढमूलतया सूद्धरम्। नलस्तम्बं नलाख्यतृणविशेषकाण्डमिव। निहितैकहस्तः न्यस्तैकपाणिः सन्। लीलया अनायासेन। उज्जहार उद्धृतवान् ॥ ४८ ॥

अधोमुखावस्थितमेरुकल्पं
 शैलं तमुत्खाय शरण्यगोपः ।
उदश्चयन्सत्वरमूर्ध्वमूलं
 चक्रे महेन्द्रं शमितार्धगर्वम् ॥ ४९ ॥

**अधोमुखेति**। शरण्यगोपः शरणार्थिनां शरणे रक्षणे साधुर्गोपः कृष्णः। अधोमुखावस्थितमेरुकल्पम् ऊर्ध्वमूलमधोग्र यथा तथावस्थितस्य मेरोः सदृशम्। मेरुर्हि भूसरोरुहकर्णिकाकारः अग्रे विशालो मूले संकुचितः; अयं तु पर्वतान्तरवदतथाभूत इति अधोमुखावस्थितमेरुकल्पमित्युक्तम्। त शैलम्। उत्खाय उद्धृत्य। सत्वर शीघ्रम्। ऊर्ध्वमूलं यथा तथा उदश्चयन् मूलं परिवर्त्य उद्गमयन्। महेन्द्रं शमितार्धगर्वं चक्रे, एतद्दर्शनादेव तस्य गर्वार्धं शान्तम्। सर्वथा गर्वशान्तिस्तु शैलोपरि वृष्टेरपि वैफल्ये सति भवतीति भावः ॥ ४९ ॥

फणाभिरामप्रसृताङ्गुलीकः
प्रियाङ्गरागव्यतिषङ्गपाण्डुः ।
भुजस्तदीयो गिरिणा बभासे
भूमण्डलेनेव भुजङ्गराजः ॥ ५० ॥

**फणेति** । फणा इवाभिरामाः प्रसृता अङ्गुल्यो यस्य सः । प्रियाणां नीलादीनाम् अङ्गरागस्य कर्पूरप्रायस्य व्यतिषङ्गेण संपर्केण पाण्डुर्धवलः । तदीयः भुजः कृष्णबाहुः । गिरिणा पर्वतेन । भुजङ्गराजः शेषः । भूमण्डलेनेव । बभासे । अङ्गुल्यः शेषस्य फणा इवासन् , अङ्गरागधवलिमा च तस्य स्वतःसिद्धपाण्डिमेवासीदित्यर्थः ॥ ५० ॥

आभुग्नरक्ताङ्गुलिपञ्जरं त-
द्रत्नोर्मिकारश्मिशलाकमन्तः ।
नवोदकक्षौमवृतं व्यभासी-
च्छत्रप्रकाण्डं हरिबाहुदण्डे ॥ ५१ ॥

**आभुग्नेति** । आभुग्ना ईषदवनता रक्ता लोहिता अङ्गुलय एव पञ्जर यस्य तत् । रत्नोर्मिकाणां रत्नमयाङ्गुलीयकानां रश्मयः किरणा एव शलाका यस्य तत् । नवोदकेनैव क्षौमेण दुकूलेन परिवृतम् । तत् । छत्रप्रकाण्ड प्रशस्तच्छत्रम् । 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकन्यमूनि' इत्यमरः । 'प्रशसावचनैश्च' इति समासः । हरिबाहावेव दण्डे । व्यभासीत् विभाति स्म । अत्र किंचिदवनता मण्डलाकारेण पर्वतमध्यं स्पृशन्त्योऽङ्गुलयः छत्रमूलग्रथितपञ्जरत्वेन, परितः तिर्यक्प्रसृता रत्नाङ्गुलीयककिरणाः छत्रशलाकात्वेन, समन्तात्प्रान्ते पतन्नवोदकं छत-

प्रान्तलम्बिदुकूलत्वेन, कृष्णबाहुः छत्रदण्डत्वेन चारोप्यते; पर्वतश्छत्रत्वेन चाध्यवसीयते इति **रूपकसंकीर्णातिशयोक्तिरलंकारः** ॥ ५१ ॥

**विहारपद्मस्पृहयेव कृष्णो**
**भुजाद्रिणा भूमिधरं दधानः ।**
**स्वशेषभूतस्य हलायुधस्य**
**प्राचीमवस्थां प्रथयांबभूव ॥ ५२ ॥**

**विहारेति** । विहारपद्मस्पृहयेव क्रीडापद्मवाञ्छयेव, क्रीडापद्मवदनायासेनेति यावत् । भूमिधरं पर्वतम् । भुजोऽद्रिरिव सारवत्त्वात्, तेन । दधानः । कृष्णः । स्वशेषभूतस्य तल्पत्वात्स्वोपसर्जनतां प्राप्तस्य । हलायुधस्य । प्राचीम् अवस्थां शेषवपुषा भूमिधारणरूपां प्राक्तनीं दशाम् । प्रथयांबभूव अनुकारेण प्रख्यापयामास । स्वजनस्याद्भुतचरित्रं लोकेषु प्रख्यापयितुमुचितमिति भावः ॥ ५२ ॥

**निवासभूते निखिलस्य तस्मि-**
**न्बालाकृतौ बिभ्रति शैलमेकम् ।**
**सविस्मयान्वीक्ष्य जहास गोपा-**
**न्संप्रीतिलक्ष्येण तदग्रजन्मा ॥ ५३ ॥**

**निवासभूत इति** । निखिलस्य जगतः । निवासभूते निवासत्वं प्राप्ते । बालाकृतौ बालवेषे । तस्मिन् । एकम् । शैलम् । बिभ्रति सति । तदग्रजन्मा तस्याग्रजो बलदेवः । सविस्मयान् कथं बालः शैलं बिभर्तीत्यद्भुतरसाविष्टान् । गोपान् । वीक्ष्य । संप्रीतिलक्ष्येण संप्रीतिव्याजेन । जहास, जगन्निवासस्यैकशैलमात्रधारणं कियदित्यजानन्त एतावत्यपि

विस्मयन्त इति परिहासाभिप्रायेण जहासेत्यर्थ । अत्र स्मितेनोद्भिन्न गोपानामुपहास सप्रीत्यभिनयेन निगूहितवानिति **व्याजोक्तिरलंकारः** । 'उद्भिन्नवस्तुनिगूहन व्याजोक्ति.' ॥ ५३ ॥

**स कालिकाकालकृपाणिकानां**
**धाराशतैराहतसंधिबन्धः ।**
**अवासृजत्क्षिप्रतरं क्षरद्भि-**
**र्धातुद्रवैर्नूनमसृञ्जि शैलः ॥ ५४ ॥**

**स इति** । कालिका नवाम्बुदा एव कालकृपाणिका कृतान्तखड्गा । 'कालिका स्यान्नवाम्बुद' इत्यमरशेष । तासाम् धाराशतैः धाराणामम्बुसततीनामेव कृपाणिकाग्राणा शतै । आहतसन्धिबन्ध । स । शैलः । क्षिप्रतरम् अतिशीघ्रम् । क्षरद्भि स्यन्दमानै । धातुद्रवै गैरिकादिद्रव्यै । नूनम् । असृञ्जि रक्तानि । अवासृजत् । कृपाणिकाभि सन्धिबन्धेषु विदारितो हि रक्तानि वर्षतीति तथा **उत्प्रेक्षा** ॥ ५४ ॥

**सगैरिकस्तस्य गिरेः समन्ता-**
**द्विलम्बितो वर्षपयःप्रवाहः ।**
**वितानपर्यन्तजुषो वितेने**
**विडम्बनां वर्णतिरस्करिण्याः ॥ ५५ ॥**

**सगैरिक इति** । तस्य । गिरे. गोवर्धनस्य । समन्तात् परित. । विलम्बित. । सगैरिक गैरिकादिभि. सहित । वर्षपय प्रवाह । वितानपर्यन्तजुष वितानस्य उल्लोचस्य पर्यन्तान् परितो देशान् जुषतीति तथोक्ता, तस्याः । वर्णतिरस्करिण्या. कुथारूपयवनिकाया. । 'प्रवेण्यास्तरण वर्ण

परिस्तोमः कुथो द्वयोः' इत्यमरः। विडम्बनाम् अनुकारम्। वितेने। कृष्णभुजोत्क्षिप्तो गोवर्धनो वितान इव, तत्परितः पतन्तो गैरिकचित्रिता वर्षजलप्रवाहा वितानस्य समन्तादावृतिभूतकुथतिरस्कारिणीसदृशाश्चेत्यर्थः ॥

**इरंमदार्चिर्व्यतिषङ्गदीप्तः**
**पाणौ हरेरद्रिपतिश्चकाशे ।**
**प्रत्यस्त्रमिन्द्रेण मुमुक्षितानां**
**प्रयुक्तमुत्खात इवाशनीनाम् ॥ ५६ ॥**

**इरंमदेति ।** हरेः । पाणौ । इरंमदार्चिर्व्यतिषङ्गदीप्तः मेघाग्निज्वालासपर्केण दीप्यमानः। अद्रिपतिः गोवर्धनः। इन्द्रेण। मुमुक्षितानां मोक्तुमिष्टानां। अशनीनां वज्राणाम्। उत्खाते उत्खनने, उन्मूलन इति यावत्। भावे क्तः। 'चर्मणि द्वीपिन हन्ति' इतिवन्निमित्तसप्तमी। प्रयुक्त संहितम्। प्रत्यस्त्रम् इव चकाशे। इन्द्रेण विसिसृक्षिताना वज्राणा निरसनार्थे प्रयुक्त दिव्यतेजसा ज्वलत् प्रत्यस्त्रमिव बभावित्यर्थः ॥ ५६ ॥

**स बाहुदण्डेन वहन्सलीलं**
**प्रवालकल्पाङ्गुलिपञ्जरेण ।**
**महीधरच्छत्रमनन्यवाह्यं**
**मायामयीं व्याकुरुतेव लीलाम् ॥ ५७ ॥**

**स इति ।** प्रवालकल्पाः पल्लवतुल्याः अङ्गुलय एव पञ्जर छत्रमध्यनीड यस्य तेन। बाहुदण्डेन बाहुनैव च्छत्रदण्डेन। अनन्यवाह्यम् अन्यैर्वोढुमशक्यम्। महीधरमेव च्छत्रम्। सलीलम्। वहन्। सः कृष्णः। मायामयीम् अद्भुतरूपाम्। लीलाम् आत्ममायाम्। व्याकुरुतेव, किंचिदुदाहरणेन व्याकृतवानित्यर्थः ॥ ५७ ॥

**करालरूक्षाकृतिवर्णभेदा-**
**न्कालाग्निनिर्वापणकल्यवृत्तीन् ।**
**रुरोध शैलीकृतया स्वशक्त्या**
**प्रायो घनान्पर्वतकूटकल्पान् ॥ ५८ ॥**

**करालेति** । करालाः तुङ्गाः रूक्षाः परुषा धूसरादिरूपा आकृतिभेदाः वर्णभेदाश्च येषां तान् । भेदशब्दस्य द्वन्द्वान्तस्थतया प्रत्येकं सबन्धः । करालरूक्षविशेषणयोश्च यथासख्यमाकृतिवर्णान्वयः । 'तुङ्ग करालमुत्तुङ्गम्' इत्यमरशेषः । 'कर्कशे परुषे रूक्षः' इति वैजयन्ती । कालाग्निनिर्वापण-कल्यवृत्तीन् प्रलयानलशमनपटुवृत्तीन् । पर्वतकूटकल्पान् शैलशिखरसदृ-शान् । घनान् । प्रायः नूनम् । शैलीकृतया पर्वतीकृतया । स्वशक्त्या । भगवानेव रुरोध । कथमन्यथा तेषां सरम्भ पर्वतः सहेतेति भावः ॥५८॥

**पृथ्व्या यथावद्भरितं गिरेस्त-**
**न्मूलं निवासाय गवां बभूव ।**
**ग्रासानुभावग्रहणार्हमासी**
**दग्रं च तस्यानतिविप्रकृष्टम् ॥ ५९ ॥**

**पृथ्व्येति** । पृथ्व्या भूम्या । यथावत् सम्यक् । भरितं भगवदाज्ञया पूरितम् । गिरेः उद्धृतस्य । तत् मूलम् । गवाम् । निवासाय । बभूव । अन्यथा उत्खातशैलगर्ते तासामवस्थानसुख न संभवतीति भावः । तस्य शैलस्य । अनतिविप्रकृष्टम् अधोग्रत्वादतिविप्रकर्षरहितम् । अग्र च । ग्रासानुभावग्रहणार्हम् आसीत् , ग्रस्यन्त इति ग्रासास्तृणानि, तेषामनु-भावः समृद्धिः, अनुभावशब्देनानुभववाचिना समृद्धिरिह लक्ष्यते । तद्ग्रहणे अर्हमुचितमभवत् ॥ ५९ ॥

उदञ्चितस्याद्रिपतेरुपान्ते
पयःप्रवाहा निबिडं पतन्तः।
अतन्वत स्फाटिकवप्रशोभा-
मन्तर्गतैरस्तभयैरवेक्ष्याम् ॥ ६० ॥

**उदञ्चितस्येति**। उदञ्चितस्य उत्क्षिप्तस्य। अद्रिपतेः। उपान्ते पर्यन्ते। निबिडम् अविरलम्। पतन्तः। पयःप्रवाहाः। अस्तभयैः निरस्तवृष्टिभयैः। अन्तर्गतैः गोपजनैः। अवेक्ष्याम् अवेक्षणीयाम्। स्फाटिकवप्रशोभां स्फटिकमयप्राकारशोभाम्। अतन्वत अकुर्वत। प्रथमवर्षधाराभिर्धातुषु निःशेषं क्षालितेषु पश्चान्नैसर्गिकधावल्यभाज एव धाराः पतन्तीति स्फाटिकेत्युक्तम् ॥ ६० ॥

अलब्धसूर्येन्दुकरप्रवेशे
मूले गिरेरावसतां जनानाम्।
स्वलोचनद्वंद्वविहारभेदा-
न्नक्तंदिनान्यातनुते स्म नाथः ॥ ६१ ॥

**अलब्धेति**। नाथः कृष्णः। गिरेः। मूले। अलब्धसूर्येन्दुकरप्रवेशे उपरि निरोधात्परितो वप्राकारजलप्रवाहनिरोधाच्च अप्राप्तरविशशिकिरणप्रवेशे सति। आवसतां गिरिमूलमधिवसताम्। जनानाम्। नक्तंदिनानि रात्रीर्दिवसांश्च। स्वलोचनद्वंद्वविहारभेदात् चन्द्रसूर्यात्मकस्य स्वनेत्रयुग्मस्योन्मेषभेदात्, रात्रौ वामस्य दिवा दक्षिणस्य चोन्मेषात्। आतनुते स्म अकरोत् ॥ ६१ ॥

मुकुन्दगात्रं मणिदर्पणाभं
छायापदेशेन विगाहमानैः ।
सगोधनैस्तत्र सुरेन्द्रभीत्या
गोपैस्तदा गूढमिवावतस्थे ॥ ६२ ॥

**मुकुन्दगात्रमिति** । मणिदर्पणाभ रत्नमुकुरप्रभम् । मुकुन्दगात्र कृष्णदेहम् । छायापदेशेन प्रतिबिम्बव्याजेन । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः । विगाहमानैः प्रविशद्भिः । सगोधनैः । गोपैः । तत्र मुकुन्दगात्रे । सुरेन्द्रभीत्या इन्द्राद्भयेन । गूढम् अवतस्थ इव च्छन्नमवस्थितमिव । अत्र च्छायापदेशेनेत्यपह्नुत्या गूढमिवावतस्थ इत्युत्प्रेक्षणात् सापह्नवोत्प्रेक्षालंकारः ॥ ६२ ॥

बिभर्ति कृष्णः सुकुमारगात्रः
क्षमाधरं तेन विभावयामः ।
तदग्रजोऽसौ बिभृयादशेषां
बलः क्षमामित्यवदन्व्रजस्थाः ॥ ६३ ॥

**बिभर्तीति** । सुकुमारगात्रः कोमलदेहः । कृष्णः । क्षमाधर पर्वतम् । बिभर्ति । तेन । तदग्रजः तस्यापि पूर्वजः । असौ बलः । अशेषां समस्ताम् । क्षमां भूमिम् । बिभृयात् दध्यात् । इति विभावयामः प्रतीमः । इति । व्रजस्थाः गोपाः । अवदन् । बलदेवस्य शेषावतारतयापि सकलभूमण्डलधारकतौचित्यं ध्वन्यते ॥ ६३ ॥

बभ्रुः स्वशाखाग्रथिताग्रपादै-
स्तपोधनैः साकमधःशिरोभिः ।

कृताभिमुख्याः कृतिनो मुकुन्दे
तपःप्रवृत्ता इव तत्र वृक्षाः ॥ ६४ ॥

बभुरिति । तत्र पर्वते । स्वशाखाग्रथिताग्रपादैः निजशाखासु बद्धाग्रचरणैः । अधःशिरोभिः अवाङ्मुखैः । तपोधनैः सार्धम् । मुकुन्दे कृताभिमुख्याः शैलवत्स्वयमप्यधोग्रतया कृष्णाभिमुखाः । अत एव, कृतिनः धन्याः । वृक्षाः । तपसि प्रवृत्ता इव । बभुः ॥ ६४ ॥

अधोमुखस्याद्रिपतेस्तृणानि
स्पृष्ट्वा मुकुन्देन निदर्शितानि ।
जातस्पृहा जग्रसिरे सहर्षं
गावस्तदा किंचिदिवोन्नमन्त्यः ॥ ६५ ॥

अधोमुखेति । तदा । अधोमुखस्य । अद्रिपतेः गोवर्धनस्य । मुकुन्देन । स्पृष्ट्वा । निदर्शितानि दर्शितानि । तृणानि । जातस्पृहाः तृणप्रदर्शनेन तेषूत्पन्नस्पृहाः । गावः । किंचिदिव स्वल्पम् । उन्नमन्त्यः सत्यः । सहर्षम् । जग्रसिरे ग्रसन्ते स्म ॥ ६५ ॥

मणिप्रदीपैरतमांसि गोप्यः
प्रविश्य रम्याणि गुहागृहाणि ।
अस्पृष्टशीतोष्णमयत्नलब्धं
स्वस्थाशयाः स्वर्गमिवान्वभूवन् ॥ ६६ ॥

मणिप्रदीपैरिति । गोप्यः । मणिप्रदीपैः । अतमांसि तमोरहितानि । रम्याणि । गुहा एव गृहाणि । प्रविश्य । स्वस्थाशयाः स्वस्थ-

चित्ताः सत्यः । अस्पृष्टशीतोष्ण शीतोष्णबाधास्पर्शरहितम् । अयत्नलब्ध यत्न विना प्राप्तम् । स्वर्गम् । अन्वभूवन्निव ॥ ६६ ॥

यथापुरं तत्र सपुत्रदारै-
रच्छिन्नगोदोहनमन्थनाद्यैः ।
स्वप्नावबोधप्रभृतीनि गोपैः
सिषेविरे विस्मृतपूर्ववासैः ॥ ६७ ॥

**यथेति** । तत्र छत्रशैलाभ्यन्तरे । यथापुर यथापूर्वम् । अच्छिन्नगोदोहनमन्थनाद्यैः अविच्छिन्नगोदोहनदधिमथनादिकृत्यैः । अत एव, विस्मृतपूर्ववासैः । सपुत्रदारैः । गोपैः । स्वप्नावबोधप्रभृतीनि निद्रागमे स्वप्नः ततः प्रबोधकालेऽभ्यवहार इत्यादीनि । सिषेविरे सेव्यन्ते स्म । कर्मणि लिट् । वृष्ट्या न कस्यापि कृत्यस्यान्तरायोऽभवदिति भावः ॥ ६७ ॥

अस्पृष्टधाराजलबिन्दुसेकै-
रकम्पमानैरपदन्तवीणैः ।
गोपीजनैरादधिरे विहारा
गिरीन्द्रमूले गृहनिर्विशेषम् ॥ ६८ ॥

**अस्पृष्टेति** । गिरीन्द्रमूले गोवर्धनस्य मूलप्रदेशे । अस्पृष्टधाराजलबिन्दुसेकैः अस्पृष्टः अननुभूतः धाराजलबिन्दूनां सेकः सेचनं यैः, शैलमूलस्यातिविपुलतया वाताहतजलकणिकानामपि तावद्दूर प्रवेशासंभवादिति भावः। अत एव, अकम्पमानैः । अपदन्तवीणैः अपगतदन्तपङ्क्तिद्वयसंघट्टनैः । गोपीजनैः । गृहनिर्विशेष यथा तथा । विहाराः क्रीडाः । आदधिरे आद्रियन्ते स्म । कर्मणि लिट् ॥ ६८ ॥

**वनेचरा गोपगणैः समेता**
**विमुक्तपर्जन्यभया विचेरुः ।**
**महीधरच्छत्रधरे मुकुन्दे**
**वन्यानि सत्त्वानि च तत्र गोभिः ॥ ६९ ॥**

**वनेचरा इति।** मुकुन्दे। महीधरच्छत्रधरे पर्वतस्यैव च्छत्रस्य धारके सति । तत्र पर्वतमूले । गोपगणैः । समेताः मिलिताः । वनेचराः किराता-दयः । विमुक्तपर्जन्यभयाः सन्तः । पर्जन्यो मेघगर्जितं गर्जन्मेघ इन्द्रो वा । 'पर्जन्यो मेघनिर्घोषे वासवे गर्जदम्बुदे' इति रत्नमाला । विचेरुः विचरन्ति स्म । तथा वन्यानि सत्त्वानि च व्याघ्रादीनि । विमुक्तपर्जन्यभ-यानि सन्ति । गोभिः सह विचेरुः ॥ ६९ ॥

**प्रभूतधाराप्रतिपन्नशैत्यं**
**प्राप्तारमद्रिं प्रभुरद्भुतानाम् ।**
**सुदर्शनादप्यधिकामनैषी-**
**त्पवित्रतां पाणिसरोजयोगात् ॥ ७० ॥**

**प्रभूतेति ।** अद्भुतानाम् आश्चर्याणां जगन्निर्माणादिकृत्यानाम् । प्रभुः प्रभविता समर्थः कृष्णः । 'समर्थेऽधिपतौ प्रभुः' इति वैजयन्ती । प्रभू-तया बहुलया धारया वृष्टिजलसंतत्या प्रतिपन्नशैत्य प्राप्तशीतलभावम् । प्राप्तारम् अपां वृष्टिजलानां तारोऽत्युच्चध्वनिः अप्तारः, प्रकृष्टः अप्तारो यस्मिन्निति 'प्रादिभ्यो धातुजस्य' इति बहुव्रीहिः । उपरिपतद्वृष्टिजल-महाघोषयुक्तामित्यर्थः । 'तारोऽत्युच्चस्वरे मुक्ताविशुद्धौ शुद्धमौक्तिके' इति रत्नमाला । अद्रिं गोवर्धनम् । पाणिसरोजयोगात् स्वकीयकरकमल-संपर्कात् । सुदर्शनात् चक्रादपि । अधिकाम् । पवित्रताम् । पवित्रः पूतः ।

पविभ्यो वज्रेभ्यस्त्रायत इति पवित्रम्। त्रायतेः 'अन्येष्वपि दृश्यते' इति डप्रत्ययः। तस्य भावः पवित्रता ताम्। अनैषीत् नयति स्म। सुदर्शनोऽपि प्रभूतायां धारायां खस्याग्रभागे प्रतिपन्नशैत्यः प्राप्तनिशितभावः। 'धारा पूः कापि सेनाग्रं पतदम्ब्वादिसंततिः। खड्गादिनिशितप्रान्तस्तुरङ्गगति-पञ्चकम्' इति रत्नमाला। प्राप्ता अरा अनेनेति प्राप्तारश्च। अरा नाम चक्राणां नेमिनाभिमध्यगतावयवाः। तथैव वैजयन्ती 'स्त्री नेमिर्ना प्रधि-श्चक्रप्रान्ते कुम्बा तु नाभिका। अरास्तयोः स्थिता मध्ये' इति। एवमिद विशेषणद्वयं सुदर्शनेऽपि समानम्। किंतु त भगवान्पाणिसरोजयोगात्पूत-तारूपामेकां पवित्रतामनैषीत्। गोवर्धन तु पूततारूपां पविभ्यो मेघनि-र्घातवज्रेभ्यस्त्रातृतारूपां चोभयीं पवित्रतामनैषीदिति विशेष इत्यभिप्रायः। अत्र पवित्रतामिति श्लेषानुप्राणितः सुदर्शनादुपमानादद्रेरुत्कर्षकथनरूपो **व्यतिरेकालंकारः**। वज्रच्छिन्नपक्षतया वज्रात्त्रस्यन्तमद्रि वज्रेभ्यस्त्रातृ-तामनैषीदिति **विरोधाभासश्च** गम्यते। तत्स्फोरणायैव तस्याघटित-संघटनाशक्तिं व्यञ्जयितुमद्भुतानां प्रभुरिति निर्देशः कृतः। ततश्च साभि-प्रायविशेष्यनिर्देशरूपः **परिकराङ्कुरालंकारः** ॥ ७० ॥

**मुकुन्दहस्ताम्बुरुहाधिरोहा-**
**त्प्राप्तः श्रियं मेरुमुखैरलभ्याम्।**
**वर्षापदेशेन गिरिः स लेभे**
**नगाधिपत्यार्हमिवाभिषेकम् ॥ ७१ ॥**

**मुकुन्देति**। मुकुन्दस्य हस्तोऽम्बुरुहमिव तस्याधिरोहादारोहणात्। मेरुमुखैः हेमाचलप्रभृतिभिः पर्वतान्तरैः। अलभ्याम्। श्रियं शोभामेव लक्ष्मीम्। प्राप्तः। सः। गिरिः। वर्षापदेशेन वृष्टिव्याजेन। नगाधिप-त्यार्हं पर्वतकुलाधिराज्योचितम्। अभिषेकम्। लेभ इव। अत्र वर्षा

पदेशेनेत्यपह्नुत्या अभिषेक लेभ इवेत्युत्प्रेक्षणात्**सापह्नवोत्प्रेक्षालं-कारः** ॥ ७१ ॥

**मदोल्बणानामिव बल्लवीनां**
**गीतं गणैः शौरिगुणानुबन्धम् ।**
**गुहाविशेषैर्ध्रुवमन्ववादी-**
**द्गोवर्धनो गोपगणाभिनन्द्यः ॥ ७२ ॥**

**मदोल्बणानामिति**। गोपगणाभिनन्द्य वर्षात्राणाद्गोपगणश्लाघ्य । गोवर्धन । मदेन उल्बणाना तीव्राणा मदनपारवश्येन तीव्रमदानामिव स्थितानाम् । वल्लवीनाम् । गणै । गीतम् । शौरेर्गुणाना विक्रमादीनामनु-बन्धमनुवृत्तिम् । गुहाविशेषै. प्रतिध्वनिमाद्भि गुहाभेदै । ध्रुव नूनम् । अन्ववादीत् अनुवदति स्म । **उत्प्रेक्षालंकारः** ॥ ७२ ॥

**कराग्रयन्त्रे घटितेन कृष्णः**
**सवारिणा सानुमताभिगुप्तान् ।**
**अलम्भयद्गोपगणान्सदारा-**
**न्धारागृहाभ्यन्तरवाससौख्यम् ॥ ७३ ॥**

**कराग्रेति**। कृष्ण । कराग्र एव यन्त्रे उपरि सलिलोत्पादनयन्त्रे । घटितेन । सानुमता पर्वतेन । अभिगुप्तान् । सदारान् । गोपगणान् । धारागृहाभ्यन्तरवाससौख्यम् अलम्भयत् । धारागृहाभ्यन्तरेषु भोगिन-स्तरुणीसहिता' सुख्यन्तीति भाव. । यद्यपि लभेः प्राप्त्यर्थताया न द्विकर्मकता तथापि तस्य प्राप्त्युपसर्जनकगत्यर्थताप्यस्तीति तद्विवक्षयेह 'गतिबुद्धि' इत्यादिसूत्रेण द्विकर्मकता । तथा च वामन 'लभेर्गत्यर्थ-त्वाण्णिच्यणौ कर्तु कर्मत्वाकर्मत्वे' इति ॥ ७३ ॥

अचिन्त्यशक्तेरकुमारयूनः
कौमारलीलाकवचेन गुप्तम् ।
बलं तदाग्राङ्गुलिसंश्रिताद्रे-
स्तावत्परिच्छिन्नमबोधि गोपैः ॥ ७४ ॥

**अचिन्त्यशक्तेरिति** । अचिन्त्यशक्तेः अप्रमेयशक्तेः । अकुमारयूनः पुराणपुरुषतया कौमारयौवनरहितस्य । अग्राङ्गुलिसंश्रिताद्रेः । अग्रं चासावङ्गुलिश्च । अवयवावयविनोरभेदविवक्षया अग्राङ्गुल्योः कर्मधारयः । यदाह वामनः 'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्याम्' इति । तामग्राङ्गुलिं संश्रितोऽद्रिर्यस्य तस्य कृष्णस्य । तत् प्रसिद्धमखिलजगद्धारणकर्म । कौमारलीलाकवचनेन गुप्त कौमारविहारेणैव कवचेन च्छन्नम् । बलम् । गोपैः । तावत्परिच्छिन्नम् अबोधि । अहो शैलधारणक्षममस्य बलमित्येतावन्मात्रपरिमितमज्ञासिषुः । बुधेः कर्मणि लुङ् ॥ ७४ ॥

निमेषनिष्ठ्यूतयुगानि यासां
येभ्यो निरोधव्यसनान्यभूवन् ।
तासां स तैः सार्धमभूत्समीक्ष्यो
वामभ्रुवां वल्लवयूथनाथः ॥ ७५ ॥

**निमेषेति** । यासां गोपिकानाम् । निमेषनिष्ठ्यूतयुगानि निमेषोऽष्टत्रुटिपरिमितः कालः । तदुक्तं वैजयन्त्याम् 'कालोऽनेहा च दिष्टोऽपि सूक्ष्मः स्त्री तु त्रुटिर्मता । द्वे त्रुटी लघ्वक्षरकस्तौ द्वावक्षरवातकः । तौ निमेषः' इति । तन्मात्रेण निष्ठ्यूतानि सृष्टानि युगानि यैः । निष्ठ्यूतशब्दस्य सृष्टौ गौणत्वान्न ग्राम्यता । तदुक्तं दण्डिना 'निष्ठ्यूतोद्गीर्णवान्तादि गौण-

वृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्ष्यां विगाहते' इति । तथाभूतानि । येभ्यः स्वस्वभर्तृभ्यः निरोधव्यसनानि गृहकृत्येषु विनियोजनेन कृष्णदर्शननिरोधात्सभूतानि व्यसनानि कृष्णे कामोद्रेकजग्लान्यादयो दोषाः । 'व्यसन विपदि भ्रशे द्वेषे कामजकोपजे' इत्यमरः। अभूवन् अजनिषत । तासाम् । वामभ्रुवां गोपवनितानाम् । तैः स्वभर्तृभिरेव । सार्ध सह । वल्लवयूथनाथः गोपकुलस्वामी कृष्णः । समीक्ष्यः दृश्यः। अभूत्, शैलधारणाद्भुतदर्शनव्याजेन भर्तृभिः सहैव गोप्यस्त निर्निरोधमपश्यन्नित्यर्थः ॥ ७५ ॥

**कृतार्थभावं भृशमादधाने**
**कृष्णाङ्गसंस्पर्शविलोकनादौ ।**
**अयन्त्रिताभिश्चिरमाशशंसे**
**वर्षानुवृत्तिर्व्रजसुन्दरीभिः ॥ ७६ ॥**

**कृतार्थभावमिति** । भृश कृतार्थभावम् आदधाने जनसमक्षमेव लाभादत्यर्थं चेतस्तृप्तिं संपादयति । कृष्णाङ्गसस्पर्शविलोकनादौ जनसंमर्दशैलधारणकृताद्भुतकौतूहलादिव्याजेन क्रियमाणे भगवदङ्गसस्पर्शवीक्षणादौ । आदिपदेन तद्गुणकीर्तनादि गृह्यते । तस्मिन्, अयन्त्रिताभिः निर्निरोधाभिः । व्रजसुन्दरीभिः । चिरम् । वर्षानुवृत्तिः । आशशसे प्रार्थ्यत, वृष्टिनिवृत्तौ स्वस्वगृह गतानामेव तदङ्गस्पर्शाद्यभावादिति भावः ॥ ७६ ॥

**धारानिपातैः स्तनतां घनाना-**
**मक्षप्रमाणैरभिहन्यमानः ।**
**आकस्मिकीमन्वभवत्स शैलो**
**वज्रव्यथां वासवरोषजाताम् ॥ ७७ ॥**

**धारानिपातैरिति** । स्तनता गर्जताम् । घनाना मेघानाम् । अक्ष-प्रमाणै रथाङ्गप्रमाणै । 'अक्षमिन्द्रियमक्षो ना रथाङ्गव्यवहारयो । पाशके शाकटे कर्षे द्यूतभेदे कलिद्रुमे' इति रत्नमाला । धारानिपातै. । अभितो हन्यमान । स. । शैल । वासवकोपजाताम् इन्द्रकोपप्रभवाम् । आकस्मि-कीम् अकस्माद्भवाम् । वज्रव्यथा निर्निमित्तदम्भोलिपतनदु.खम् । अन्व-भवत् । पूर्वं हि पर्वता लोकरक्षानिमित्तेन पक्षखण्डनसमये वज्रव्यथा-मन्वभूवन् । इदानी तु धारानिपातेनेति भाव. ॥ ७७ ॥

**तमेकहस्ताङ्गुलियन्त्रलग्नं**
**धाराहतं धारयतस्त्रिधाम्नः ।**
**अमुक्तबाल्यस्य समग्रशक्तेः**
**क्षणार्धवत्सप्त दिनान्यतीयुः ॥ ७८ ॥**

**तमिति** । एकस्य हस्तस्याङ्गुलावेव यन्त्रे लग्न श्लिष्टम् । धाराभिरा-हतम् । त शैलम् । धारयत । अमुक्तबाल्यस्य । समग्रशक्ते सपूर्णशक्ते । त्रिधाम्न कृष्णस्य । क्षणार्धवत् क्षणार्धेन तुल्य यथा तथा । सप्त । दिनानि । अतीयु· अतिक्रान्तानि ॥ ७८ ॥

**स तादृशांस्तोयभृतो युगान्ते**
**श्वासानिलैः शोषयितुं क्षमोऽपि ।**
**महेन्द्रदर्पात्ययमात्रकाङ्क्षी**
**प्रख्यापयामास गिरेः प्रभावम् ॥ ७९ ॥**

ननु युगान्ते वृष्ट्या एकार्णवीकृतत्रैलोक्यान्पुष्कलावर्तकादीन्नि श्वसि-तैरेव शोषयति देव । तथा हि पुराणवचनम् 'धाराभिरक्षमात्राभि· पूर-

यित्वाखिलां भुवम् । भुवर्लोकं तथैवोर्ध्वं प्लावयन्ति ततो द्विज । अन्ध-कारीकृते लोके नष्टे स्थावरजङ्गमे । वर्षन्ति ते महाघोरा वर्षाणामपरं शतम् । सप्तर्षिस्थानमाक्रम्य स्थितेऽम्भसि महामुने । एकार्णवं भवत्येव त्रैलोक्यमखिलं द्विज । मुखनिःश्वासजो विष्णोर्वायुस्ताञ्जलदांस्ततः । नाश-यन्वाति मैत्रेय वर्षाणामपरं शतम्' इति। तस्य भगवतः किमित्यथ वृष्टि-वारणाय शैलधारणप्रयासानुभवस्तत्राह— **स इति** । सः कृष्णः । तादृ-शान् प्रसिद्धानुभावान् । तोयभृतः पुष्कलावर्तकादीन्प्रलयघनान् । युगा-न्ते । श्वासानिलैः । शोषयितुम् । क्षमोऽपि समर्थोऽपि । महेन्द्रदर्पात्यय-मात्रकाङ्क्षी शक्रगर्वापनयमात्र काङ्क्षमाणः । गिरेः गोवर्धनस्य । प्रभाव माहात्म्यम् । प्रख्यापयामास । 'प्रतापमाहात्म्ययोः प्रभावः स्यात्' इति वैजयन्ती । गिरिपूजया क्रुद्धस्य शक्रस्य गर्वो गिरिप्रभावख्यापनेनैवापनेय इति भावः ॥ ७९ ॥

**एकत्र संरक्षति कृष्णमेघे**
**गोत्रेण चैकेन गवां कुलानि ।**
**अशेषगोत्रौघभिदा नियुक्तै-**
**र्मेघायुतैर्मोघतमैर्बभूवे ॥ ८० ॥**

**एकत्रेति** । एकत्र एकस्मिन् । कृष्ण एव मेघे, कालमेघ इत्यपि गम्यते । एकेन च गोत्रेण एकेनैव पर्वतेन । चकारोऽवधारणार्थः । 'चान्वाचये समाहारेऽप्यन्योन्यार्थे समुच्चये । पक्षान्तरे तथा पादपूरणेऽ-प्यवधारणे' इति विश्वः । गवाम् । कुलानि । संरक्षति सति । अशेषगो-त्रौघभिदा अखिलपर्वतसमूहविदारकेण शक्रेण । नियुक्तैः । मेघायुतैः मेघानामयुतैः अनेकदशसहस्रैः । मोघतमैः अतिशयेन व्यर्थैः । बभूवे भूयते स्म । भावे लिट् । एकं गोत्रमवष्टभ्य गोकुलसंरक्षणायैकस्मिन्मेघे

प्रवृत्तेऽखिलानामपि गोत्राणां जेतारमवष्टभ्य प्रवृत्ता बहवो मेघा मोघीबभूवुरिति बहुभ्योऽपि प्रसिद्धमेघेभ्यः एकस्य कृष्णमेघस्यातिशयनिबन्धनात् **व्यतिरेकालंकारः** ॥ ८० ॥

**व्रजोपमर्दे वितथे सुरेन्द्रः**
**स्वयंवृतोऽपत्रपया भिया च ।**
**दुनोति मामिन्द्रपदं दुरन्तं**
**किंपौरुषं केवलमित्यदुःख्यत् ॥ ८१ ॥**

**व्रजेति** । सुरेन्द्रः शक्रः । व्रजोपमर्दे गोकुलोपमर्दने । वितथे व्यर्थे सति । अपत्रपया परेभ्यो लज्जया । भिया च कृतापकारतया कृष्णाद्भयेन च । स्वयंवृतः स्वयवरेण प्रापितः सन् । किंपौरुषं कुत्सितपराक्रमम् । अत एव दुरन्तं दुष्टो हेयोऽन्तः स्वरूपं यस्येति तथोक्तम् । 'अन्तोऽस्त्र्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके' इति वैजयन्ती । इन्द्रपदं केवलम् इन्द्रपदमेव । माम् । दुनोति क्लिश्नाति । इति । अदुःख्यत् दुःख्यति स्म । निर्वहणोचितपराक्रमरहितं स्वकीयं पदमेव जगर्हे इत्यर्थः ॥ ८१ ॥

**निवृत्तरोषे निभृतेऽपि शक्रे**
**संदर्शितस्वामिनिदेशसङ्गाः ।**
**ववर्षुरुग्रां मुहुरश्मवृष्टिं**
**वैरोपपन्ना इव वारिवाहाः ॥ ८२ ॥**

**निवृत्तेति** । निवृत्तरोषे अपगतक्रोधे । शक्रे । निभृते विनीतेऽपि । 'निभृतविनीतप्रश्रिताः समाः' इत्यमरः । संदर्शितस्वामिनिदेशसङ्गाः संदर्शितेन्द्रनियोगासङ्गाः । वारिवाहाः । वैरोपपन्नाः शात्रवयुक्ता इव ।

उग्राम् । अश्मवृष्टिम् उपलवृष्टिम् । ववर्षुः बर्षन्ति स्म । लोके हि दण्डनप्रवृत्ता राजभटाः प्रसन्नेऽपि राज्ञि निर्दाक्षिण्यं तदुपपीडन कुर्वन्तीति भावः ॥ ८२ ॥

निवार्य दुर्वारजवान्पयोदा-
न्नाथं सतां नन्दसुतं प्रपित्सुः ।
करम्बितप्रीतिभयः क्षणार्धं
व्यक्तिं भजन्व्योमतलेऽवतस्थे ॥ ८३ ॥

**निवार्येति**। सतां सात्विकानाम्। नाथम्। नन्दसुतं कृष्णम् । प्रपित्सुः प्रपत्तुमिच्छुः । 'सनि मीमाघुरभलभशकपतपदामच इस्' इत्यकारस्य इसि 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः । करम्बितप्रीतिभयः, करम्बिते संवलिते प्रीतिभये अचलधारणदर्शनेन कृष्णस्य कंसादिनिग्रहेऽपि शक्तिरस्तीति प्रीतिः, कृतापकारतया ततो भय च यस्मिन्स इन्द्रः । दुर्वारजवान् दुर्वारवेगान् । पयोदान् । निवार्य । क्षणार्धं स्वल्पकालम् । व्योमतले । व्यक्तिं भजन् दृश्यतां प्राप्तः सन् । अवतस्थे । भगवद्दर्शने कौतूहलात्त्वरितमवरुरुक्षुरपि भयान्निरुद्ध इव कंचित्काल व्योमतले स्थित इत्यर्थः ॥ ८३ ॥

क्रमेण पृथ्वीमभिगन्तुकामः
श्वेताभ्रपर्यायगजाधिरूढः ।
विलोचनव्याञ्जितपद्मसंप-
द्वर्षात्ययो मूर्त इवाबभासे ॥ ८४ ॥

**क्रमेणेति** । क्रमेण शनैः। पृथ्वीम् । अभिगन्तुकामः अवतरितुकामः।

श्वेताभ्रपर्यायगजाधिरूढः शुभ्रमेघसदृशमैरावतमारूढः। विलोचनैर्व्यञ्जितपद्मसपत् प्रकाशितकमलसपत् इन्द्रः। मूर्तःमूर्तिमान्। मूर्तिशब्दादर्शआद्यच्। वर्षात्ययः शरत्समय इव आबभासे। अत्र शक्रस्य शरत्समयत्वेनोत्प्रेक्षा श्वेताभ्रपर्यायेत्युपमया विलोचनैरित्यादिरूपकेण चोत्थापितेति संकरः॥ ८४॥

**पुनः प्रसन्नां पुरुहूतदान्त्या**
**पश्यन्दिवं प्राणभृतामधीशः।**
**तमद्रिमव्याहतदिव्यलीलः**
**संतोलयामास निवेशयिष्यन्॥ ८५॥**

**पुनरिति**। पुरुहूतदान्त्या इन्द्रस्योपशमेन। पुनः प्रसन्नां पुनरपि यथापूर्वं निर्मलाम्। दिवम् आकाशम्। पश्यन्। अव्याहतदिव्यलीलः अप्रतिहताप्राकृतलीलः। प्राणभृतामधीशः कृष्णः। तमद्रिं गोवर्धनम्। निवेशयिष्यन् यथापूर्वं स्थापयिष्यन्। संतोलयामास यथास्थानमेव निवेशयितुं परिवर्तयामासेत्यर्थः॥ ८५॥

**विलक्षवृत्त्यैव तिरोहितेषु**
**मेघेषु विश्रान्तविकत्थनेषु।**
**स्थाने निवेशादचलीचकार**
**छत्राचलं शौरिरखिन्नबाहुः॥ ८६॥**

**विलक्षेति**। 'आत्मनश्चरिते सम्यग्ज्ञातेऽन्यैर्यस्य जायते। अपत्रपातिमहती स विलक्ष इति स्मृतः' तद्वृत्त्या तत्प्रकारेणैव। विश्रान्तविकत्थनेषु विश्रान्तं विकत्थनमात्मश्लाघातुल्या गर्जा येषां तेषु। मेघेषु।

तिरोहितेषु सत्सु । अखिन्नबाहुः चिरतरगिरिधारणेऽप्यश्रान्तभुजः । शौरिः । छत्राचलं छत्राकारं गिरिं गोवर्धनम् । स्थाने निवेशात् तदीये स्थाने यथापूर्वं स्थापनात् । अचलीचकार अचलं कृतवान् ॥ ८६ ॥

**उत्क्षिप्यमाणः परिवर्त्यमानः**
**संस्थाप्यमानोऽपि तथैव भूयः ।**
**स तस्य संकल्पवशेन भेजे**
**शैलो न शैथिल्यकथाप्रसङ्गम् ॥ ८७ ॥**

**उत्क्षिप्यमाण इति** । उत्क्षिप्यमाणः उद्ध्रियमाणः । परिवर्त्यमानः अधोग्रतया विपरिवर्त्यमानः । भूयः तथैव संस्थाप्यमानोऽपि पुनरपि यथापूर्वं निवेश्यमानश्च । स शैलः । तस्य भगवतः । संकल्पवशेन इच्छायत्ततया । शैथिल्यकथाप्रसङ्गं शिथिलीभावकथायाः प्रसक्तिमपि । न भेजे ॥ ८७ ॥

**व्यपेतशैलव्यवधानदृश्यो**
**विभूषितः स्वेदकणैः स बालः ।**
**दिशद्भिरामोदमभौमभोग्यं**
**दिव्यैरवाकीर्यत पुष्पवर्षैः ॥ ८८ ॥**

**व्यपेतेति** । व्यपेतशैलव्यवधानदृश्यः अपगतशैलव्यवधानतया दृग्गोचरः । स्वेदकणैः किंचित्स्वेदाभिनयप्रभावितैः । विभूषितः । स बालः । अभौमभोग्यम् भूमिर्निवास एषामिति भौमः । 'सोऽस्य निवासः' इत्यण्प्रत्ययः । तेषां भोग्यो न भवतीति तथोक्तः तम् । आमोदम् सौरभम् । दिशद्भिः प्रयच्छद्भिः । 'आमोदो हर्षगन्धयोः' इति विश्वः । दिव्यैः

दिवः स्वर्गादागतैः। 'द्युप्रागपागुदक्प्रतीचो यत्' इति शैषिको यत्प्रत्ययः। पुष्पवर्षैः। अवाकीर्यत अभ्यषिच्यत ॥ ८८ ॥

**निवेश्य कृष्णं शकटीरथाग्रे**
**नाथोपचारैरुपसेदिवांसः।**
**सगोधनाः स्वं व्रजमाव्रजन्तः**
**संगीतलीलामभजन्त गोपाः ॥ ८९ ॥**

**निवेश्येति**। शकटीरथाग्रे अल्पः शकटः शकटी। 'स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये सति' इत्यल्पत्वविवक्षायां स्त्रीत्वम्। गौरादित्वान्ङीष्। सैव रथः तस्याग्रे पुरोभागे। कृष्ण निवेश्य। नाथोपचारैः राजयोग्यैरुपचारैः जयजयादिरूपैः। उपसेदिवांसः उपसृप्तवन्तः। सगोधनाः स्व व्रजमाव्रजन्तः गोधनैः सहिताः स्वकीयं गोकुल प्रत्यागच्छन्तः। गोपाः। संगीतलीलामभजन्त हर्षाद्गीतनृत्तवाद्यलीलामसेवन्त चक्रुः। 'गीतं नृत्तं तथा वाद्य त्रय सगीतमुच्यते' इदि शार्ङ्गदेवः ॥ ८९ ॥

**कच्चिन्न खिन्नोऽसि वहन्गिरीन्द्रं**
**कच्चिन्न विम्लायति पाणिपद्मम्।**
**इति ब्रुवाणाः सुहृदो मुकुन्दं**
**पर्याकुलाः पस्पृशुरङ्गमङ्गम् ॥ ९० ॥**

**कच्चिदिति**। गिरीन्द्र वहन्। न खिन्नोऽसि कच्चित् न खिन्नोऽसि किम्। 'कच्चित्प्रश्ने कामवादे' इति वैजयन्ती। पाणिपद्मं तव करकमलम्। न विम्लायति कच्चित् नावसीदति किम्। इति मुकुन्दं ब्रुवन्तः सुहृदः। पर्याकुलाः परितो विस्तृतहस्ताः सन्तः। अङ्गमङ्ग पस्पृशुः स्नेहात्प्रत्यङ्गं परामृशन्ति स्म ॥ ९० ॥

अथावतीर्य स्वयमन्तरिक्षा-
दनुज्झितैरावतदानवर्षात् ।
विलक्षचित्तो वसुदेवसूनुं
वल्गुस्मितं वज्रभृदाससाद ॥ ९१ ॥

**अथेति** । अथ शैलनिवेशानन्तरम् । विलक्षचित्तः लज्जितहृदयः । वज्रभृत् इन्द्रः । अनुज्झितैरावतदानवर्षात् पयोदवृष्ट्युपरमेऽपि अपरित्यक्तैरावतदानवर्षात् । अन्तरिक्षात् अवतीर्य । वल्गुस्मितं मञ्जुहासम् । वसुदेवसूनुम् । स्वयम् । आससाद ॥ ९१ ॥

पुरोदधानः सुरभिं प्रतीक्ष्या-
माजग्मुषीमात्मभुवो नियोगात् ।
अपत्रपागद्गदमाबभाषे
बद्ध्वाञ्जलिं बालमुपेन्द्रमिन्द्रः ॥ ९२ ॥

**पुर इति** । आत्मभुवः चतुर्मुखस्य । नियोगात् । आजग्मुषीं पयसा गोविन्दाभिषेकार्थं गोलोकादागतवतीम् । प्रतीक्ष्यां पूज्याम् । सुरभिं गां कामधेनुम् । पुरोदधानः पुरस्कुर्वन् । इन्द्रः । अञ्जलिं बद्ध्वा । अपत्रपया गद्गदं यथा तथा । बालम् उपेन्द्रं कृष्णम् । आबभाषे ॥ ९२ ॥

नाथ त्वया नर्मविहारभाजा
विमोहितो विप्रतिसारितश्च ।
अकिंचनस्त्वामहमाश्रितः स-
न्क्षिप्तापकारो न बहिष्क्रियार्हः ॥ ९३ ॥

**नाथेति**। हे नाथ। नर्मविहारभाजा। 'द्रवः केलिः परीहासः क्रीडा लीला च नर्म च' इत्यमरः। त्वया। विमोहितः विप्रतिसारितश्च प्राज्ञोऽहमज्ञान प्रापितस्तदनु पश्चात्तापितश्च। 'पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि' इत्यमरः। अकिंचनः उपायान्तररहितः। त्वामाश्रितः सन्। क्षिप्तापकारः प्रपत्त्यङ्गभूतप्रातिकूल्यवर्जनशेषित्वात्त्यक्तापराधोऽहम्। न बहिष्क्रियार्हः परित्यागोचितो न भवामि। सर्वथा स्वकीयत्वेन परिगृह्य रक्षणीय एवेत्यर्थः॥ ९३॥

**कृतापराधेष्वपि सानुकम्पं**
**क्षेमंकरं क्षेत्रविवेचकानाम्।**
**विश्वोपकाराध्वरबद्धदीक्षं**
**वेद्यं परं वेदविदो विदुस्त्वाम्॥ ९४॥**

**कृतापराधेष्विति**। कृतापराधेष्वपि। सानुकम्प सदयम्। क्षेत्रविवेचकानाम् इदं क्षेत्रमयं क्षेत्रज्ञ इति देहातिरिक्तात्मविवेचकानाम्। क्षेमंकर शुभावहम्। 'क्षेत्रं पुरे गृहे देहे' इति वैजयन्ती। 'क्षेमप्रियमद्रेऽण्च' इति खच्प्रत्ययो मुमागमश्च। विश्वोपकार एवाध्वरे बद्धदीक्ष गृहीतव्रतम्, अभिनिविष्टमिति यावत्। त्वाम् परमुत्कृष्टम्। वेद्यम् उपासनीयम्। विदुः जानन्ति। 'वेदविदो वदन्ति' इति पाठे आहुरित्यर्थः॥ ९४॥

**निगृह्णतस्ते सृजतश्च वर्षं**
**निमित्तभावे निहितैस्त्वयैव।**
**प्रवर्तते निष्प्रतिघो विहारः**
**स्वयं प्रयुक्तैरिव यन्त्रभेदैः॥ ९५॥**

**निगृह्णत इति** । वर्षं वृष्टिम् । निगृह्णतः उपसंहरतः । सृजतः सपादयतश्च । ते त्वयैव । निमित्तभावे निहितैः । तत्तदधिकारपदरूपे वृष्ट्यादिहेतुभावे निवेशितैः । अस्मदादिभिरिति शेषः । स्वय प्रयुक्तैः यन्त्रभेदैरिव कृतैर्यन्त्रविशेषैरिव । निष्प्रतिघो विहारः अप्रतिहता क्रीडा । प्रवर्तते । यथा स्वकृतैर्यन्त्रैस्तत्तत्कार्यं कारयन्तः कुशलाः क्रीडन्ति, एवं वृष्ट्यादिनिमित्तभावे निहितैरस्मदादिभिर्वृष्ट्यादिकार्यं स्वेच्छयैव प्रयोजयतः क्रीडनमेव । तन्मे न कश्चिदपराधो मन्तव्य इति भावः ॥ ९५ ॥

अनन्यसाधारणपारमेष्ठ्या-
दन्यानशेषानतिसंदधानात् ।
गोपायितुं पारयति त्रिलोकीं
गोपायमानादपि न त्वदन्यः ॥ ९६ ॥

**अनन्येति** । परमे व्योमनि चिदाकाशस्थाने तिष्ठतीति परमेष्ठी । 'परमे स्थः कित्' इतीनिः । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । 'स्थास्थिन्स्थूनामिति वक्तव्यम्' इति षत्वम् । परमेष्ठिनो भावः पारमेष्ठ्यम् । अनन्यसाधारणं पारमेष्ठ्य सर्वोन्नतपदस्थायित्व यस्य तस्मात् । अन्यानशेषान् स्वव्यतिरिक्तान्सर्वान्देवासुरादीन् । अतिसंदधानात् पारमेष्ठ्याच्छादकभूमिकापरिग्रहेण वञ्चयतः । गोपायमानात् गोपवदाचरतोऽपि । त्वत् त्वत्तः । अन्यः कोऽपि । त्रिलोक्यां गोपायितुं रक्षितुम् । न पारयति न शक्नोति । गोपकुमारवेषोऽपि त्वमेव त्रीन् लोकान् रक्षितुं शक्तः । अन्ये त्वस्मदादयो देवादिरूपा अपि न तत्र शक्ताः । अतो गोपरूपेण त्वया शैलोद्धरणेन गोकुलमात्रं रक्षितमिति तेन मदुत्साहभङ्गः कृत इति च नेद विस्मयपदमिति भावः ॥ ९६ ॥

व्रजौकसां नाथ दिवौकसां वा
विपत्प्रसङ्गे विहितावतारः ।
एकस्त्वमेव स्वयमीप्सितानां
दयासहायो नियमेन दाता ॥ ९७ ॥

**व्रजौकसामिति** । हे नाथ । व्रजौकसां नन्दादीनाम् । दिवौकसा वा अस्मदादीनां देवानां च । वाशब्दः समुच्चये । 'वा स्याद्विकल्पे पर्याये इवार्थेऽपि समुच्चये' इति विश्वः । विपत्प्रसङ्गे कसादिभ्यो विपदः प्रसक्तौ सत्याम् । विहितावतारः । त्वम् एक एव । स्वयं दयासहायः सन् । ईप्सितानाम् । नियमेन एकान्तेन । दाता । त्वदन्यस्त्वादृशो नास्तीत्यर्थः । अतो यथा व्रजौकसो विपन्निवारणेनेष्टार्थप्रदानेन परिपाल्यन्ते । एव वयमपि परिपालनीया इति भावः ॥ ९७ ॥

स्वरूपतो विग्रहतश्च विश्वं
नित्यं त्वयैकेन धृतं यदेतत् ।
तदेकदेशोद्वहनादमुष्मा-
न्न विस्मयं तत्त्वविदो भजन्ति ॥ ९८ ॥

**स्वरूपत इति** । यदेतत्परिदृश्यमानम् । विश्वं जगत् । 'विश्वं समस्तजगतोः' इति विश्वः । स्वरूपतो विग्रहतश्च चेतनस्वरूपेणाचेतनस्वरूपेण चेति धार्यविशेषणम्, परवासुदेवस्वरूपेण व्यूहविभवादिविग्रहेण चेति धारकविशेषण वा । नित्यं सदा । त्वयैकेन धृतम् । अमुष्मात् तदेकदेशोद्वहनात् तदेकदेशस्यास्य शैलस्योद्वहनात् । तत्त्वविदः विस्मय न भजन्ति हि ॥ ९८ ॥

**प्रयोजितोऽहं त्वयि भक्तिबन्धा-**
**द्गोभिः स्वलोकादुपसेदुषीभिः ।**
**इच्छामि संरक्षितगोव्रजं त्वां**
**स्थाने गवामिन्द्रतयाभिषेक्तुम् ॥ ९९ ॥**

**प्रयोजित इति** । त्वयि । भक्तिबन्धात् । स्वलोकात् । उपसेदुषीभि आगताभि । गोभि । प्रयोजित प्रेरित । अहम् । सरक्षितगोव्रज त्रात-गोकुलम् । त्वाम् । गवाम् । इन्द्रतया ईश्वरत्वेन । अभिषेक्तुम् इच्छामि । स्थाने युक्तम् । तद्रक्षकस्य तदीश्वरत्वमुचितमिति भाव । 'युक्ते द्वे साप्रत स्थाने' इत्यमर· ॥ ९९ ॥

**तिरोहितामम्भसि विन्दता गां**
**पूर्वं त्वया पोत्रिवरेण लब्धा ।**
**निरुक्तनिष्णातकृताभ्यनुज्ञा**
**व्यक्तिं पुनर्यातु शुभा त्वदाख्या ॥ १०० ॥**

**तिरोहितामिति** । अम्भसि प्रलयार्णवजले । तिरोहिताम् । गा भूमिम् । विन्दता उद्धरणक्रियया लभमानेन । पोत्रिवरेण महावराहेण । त्वया । लब्धा । निरुक्तनिष्णातकृताभ्यनुज्ञा निरुक्ते वैदिकपदानामवयवार्थविचारेण वर्णागमवर्णविपर्ययादिनिश्चायकवेदाङ्गे निष्णातै. कुशलै. कृताभ्यनुज्ञा गा भूमि वित्तवान् लब्धवानिति गोविन्द इति निर्वचनप्रदर्शनेन कृताभ्यनुज्ञा । शुभा सकीर्तयतां श्रेयस्करी । त्वदाख्या गोविन्द इति त्वदभिख्या । पुन· व्यक्तिं यातु वराहावतारे उन्मिषितापि चिरकालेन प्रमुषिता इदानी गवा विन्दनात्पुनरपि प्रकाशतामित्यर्थः ॥ १०० ॥

उपेन्द्रभूताद्भवतोऽपि भूम्ना
मान्यो मनुष्याभिनये मया त्वम् ।
अभ्यर्थनामादरतस्तदेनां
प्रतीच्छ विश्वंभर विश्वभूत्यै ॥ १०१ ॥

**उपेन्द्रेति** । उपेन्द्रभूतात् उपेन्द्रत्व प्राप्तात् । भवतोऽपि । उपेन्द्रेति भावप्रधानो निर्देश , भूधातोश्च प्राप्त्यर्थत्वम् । तथा रत्नमालाया च 'भूत न्याय्ये समे प्राप्ते यथार्थातीतयोरपि । क्लीबे त्वय पिशाचादौ भूम्यादौ जन्तुसत्ययो ' इति । भूम्ना महिम्ना । मनुष्याभिनये मनुष्यत्वस्याभिनये एतदवताररूपे । मया मान्य मम समाननीयः । महिमातिशय एव समाननानिमित्त न तु देवादिरूपविशेष इति भाव. । हे विश्वभर । विश्व बिभर्तीति विग्रहे 'सञ्ज्ञाया भृतृवृजिधारिसहितपिदम ' इति खच्, मुमागमश्च । तत् तस्मात् । एनाम् आदरतोऽभ्यर्थनाम् इमामादरेण क्रियमाणा प्रार्थनाम् । विश्वभूत्यै जगत्समृद्ध्यै । प्रतीच्छ गृहाण ॥१०१॥

इति ब्रुवाणो मघवान्धृताद्रेः
श्रान्तिं जगद्धातुरिवापनेष्यन् ।
ध्यातोपयातां त्रिदशप्रणेता
दिव्यापगां दर्शयति स्म देवीम् ॥ १०२ ॥

**इतीति** । इति ब्रुवाणः उक्तप्रकारेण भाषमाणः । त्रिदशप्रणेता सुराणा नायकः । मघवान् इन्द्र· । धृताद्रेः विधृतगोवर्धनस्य । जगद्धातु· जगद्धारकस्य भगवतः । श्रान्तिम् अपनेष्यन्निव । ध्यातोपयाता स्मृतोपगताम् । 'पूर्वकाल—' इत्यादिना समासः । दिव्यापगा देवीं गङ्गादेवीम् ।

दर्शयति स्म । तदागमप्रदर्शनेन इदानीमेवाभिषेकप्रार्थनाङ्गीकर्तव्येति सूचितवानिति भावः ॥ १०२ ॥

**अभौमगङ्गापयसा प्रपूर्णा-**
**मावर्जयन्वारणराजघण्टाम् ।**
**अशेषसाम्राज्यपदाभिषिक्तं**
**गुप्त्यै गवां गोत्रभिदभ्यषिञ्चत् ॥ १०३ ॥**

**अभौमेति** । गोत्रभित् इन्द्रः । अभौमगङ्गापयसा प्रपूर्णाम् आकाशगङ्गाजलेन पूर्णाम् । वारणराजघण्टाम् आवर्जयन् अभिषेककुम्भस्थानीयामैरावतस्य घण्टामभिषेकाय नमयन्सन् । अशेषसाम्राज्यपदाभिषिक्तम् अखिलाधिपत्यस्थानेऽभिषिक्त कृष्णम् । गवाम् । गुप्त्यै रक्षणाय । अभ्यषिञ्चत् ॥ १०३ ॥

**तदङ्गसंस्पर्शवशेन धन्यै-**
**राप्लाव्यमानामभिषेकतोयैः ।**
**अपेतभारामिव भूतधात्री-**
**मुल्लाघितां प्रैक्षत नाकनाथः ॥ १०४ ॥**

**तदङ्गेति** । नाकनाथः इन्द्रः । तदङ्गसंस्पर्शवशेन कृष्णावयवस्पर्शायत्ततया । धन्यैः पुण्यैः । अभिषेकतोयैः अभिषेकजलैः । आप्लाव्यमानाम् आसिच्यमानाम् । भूतधात्रीं भूमिम् । अपेतभाराम् अपगतकसाद्यसुरभाराम् । अत एव उल्लाघितां उल्लाघीकृतां व्याधेर्निर्गतामिव । प्रैक्षत । असुरभारमहाव्याधिपीडिताया भूमेः कृष्णाभिषेकजलसेचनमारोग्यस्नानमिवामन्यतेत्यर्थः । 'उल्लाघो निर्गतो गदात्' इत्यमरः । उल्लाघशब्दात् 'तत्करोति' इति ण्यन्तात् क्तप्रत्ययः ॥ १०४ ॥

**कृताभिषेकः कृतिना मघोना**
**गुप्तेन गोविन्द इति स्वनाम्ना ।**
**कृतप्रसादः प्रजिघाय कृष्णः**
**स्वर्गाधिरोहाय पुनः सुरेन्द्रम् ॥ १०५ ॥**

**कृताभिषेक इति** । कृतिना धन्येन । मघोना इन्द्रेण कर्त्रा । गुप्तेन महामन्त्रान्तर्गततया ऋषिभिर्गुप्तेन । गोविन्द इति स्वनाम्ना । कृताभिषेक. अथ गोविन्द इति पूर्वसिद्धनामप्रकाशनपूर्वकं कृताभिषेक । कृतप्रसादः सुरेन्द्रे कृतानुग्रह । कृष्ण । सुरेन्द्रम् । पुन· । स्वर्गाधिरोहाय । प्रजिघाय प्रहिणोति स्म । हिनोतेर्लिटि 'हेरचङि' इति हकारस्य कुत्वम् ॥ १०५ ॥

**प्रतिगतवति यूथे पुष्कलावर्तकानां**
**दिवि भुवि च नियत्या दीर्घनिद्रोज्झितानाम् ।**
**गुणगरिमसमृद्धं गोकुलं वीक्ष्य तुष्य-**
**न्गुरुभिरभिनियुक्तामाशिषं प्रत्यगृह्णात् ॥ १०६ ॥**

**प्रतिगतवतीति** । कृष्ण । नियत्या नियमेन नियोगेन इन्द्रशासनेनेत्यर्थ । 'नियती दैवनियमौ' इत्यमर । दीर्घनिद्रोज्झितानाम् समयविजृम्भितानामित्यर्थ । पुष्कलावर्तकाना प्रलयमेघानाम् । यूथे बृन्दे । 'यूथ तिर्यक्समूहेऽपि बृन्दमात्रेऽपि भाषितम्' इति विश्व । प्रतिगतवति प्रतिनिवृत्ते सति । दिवि । भुवि च । गुणगरिमसमृद्धम् एकत्र गुणानामूष्मनैर्मल्यादीनाम् अन्यत्र क्षीरवत्त्वादीना गरिम्णा समृद्धम् । गोकुलम् एकत्र रविकिरणसमूहम् अन्यत्र धेनुयूथम् । वीक्ष्य प्रेक्ष्य । गुरुभिः नन्दा-

दिभिः अभिनियुक्तां चोदिताम् । आशिषम् जयजयादिशुभवाक्यम् । प्रत्यगृह्णात् । 'आशीरुरगदंष्ट्रायां शुभवाक्याभिलाषयोः' इति विश्वः ॥

मुकुलितरविधाम्ना देहदीप्त्यैव मुष्ण-
ञ्जलदकदनजातं जीवलोकस्य जाड्यम् ।
व्यचरदचलभोगे चारयन्धेनुचक्रं
पिशुनितनिजमायां भूषयन्पिञ्छमालाम् ॥१०७॥

**मुकुलितेति** । मुकुलितरविधाम्ना मन्दीकृतरवितेजसा, तदतिशायिन्येति यावत् । देहदीप्त्या स्वाङ्गप्रभयैव । जलदकदनजातं मेघोपद्रवसंभवम्, 'कदन मर्दने पापे' इति विश्वः । जीवलोकस्य मर्त्यलोकस्य । जाड्यं स्तब्धताम् । मुष्णन् अपहरन् । पिशुनितनिजमायां सूचितात्ममायाम्, स्वस्य मायावितां प्रकटयन्तीमिति यावत् । ऐन्द्रजालिकानां हि मयूरपिञ्छधारणं लिङ्गम् । पिञ्छमालाम् । भूषयन् धारणेन परिष्कुर्वन् । देवः । अचलभोगे पर्वततटे । भोगशब्दस्य अहिशरीरवाचकस्य शरीरसामान्ये लक्षणा । 'अचलभागे' इति पाठस्तु समीचीनः । धेनुचक्रं गोकुलम् । संचारयन् । 'चक्रं राष्ट्रे जलावर्ते रथाङ्गे चयसैन्ययोः' इति वैजयन्ती । व्यचरत् संचचार ॥ १०७ ॥

प्रणिहितमधिरोहन्प्रागिवाद्रिं पृथिव्या-
मवमतपुरुहूतैरर्चितो गोपवृन्दैः ।
व्रजपतिरुपसीदन्बालयोग्यान्विहारा-
न्वनचरपरिबर्हो वत्सपालैः सिषेवे ॥ १०८ ॥

**प्रणिहितमिति**। पृथिव्याम्। प्रागिव प्रणिहित यथापूर्व प्रतिष्ठापितम्। अद्रि गोवर्धनम्। अधिरोहन्। अवमतपुरुहूतै अवज्ञातपुरदरै। गोपबृन्दै। अर्चितः। भूतार्थे क्त। अत एव गौपबृन्दैरिति तृतीया। अन्यथा 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमानक्तार्थत्वे हि 'क्तस्य च वर्तमाने' इति तद्योगे षष्ठी स्यात्। वनचरपरिबर्हः वनचराः किरातादयः परिबर्हा परिकरा यस्येति तथोक्तः। 'परिबर्हस्तु राजार्हवस्तुन्यपि परिच्छदे' इति विश्व.। वत्सपालै सह उपसीदन् इतस्तत उपसर्पन्। व्रजपति गोकुलनाथ कृष्णः। बालयोग्यान् विहारान् सिषेवे बालोचितानि क्रीडितानि भेजे ॥ १०८ ॥

**नाथः सोऽयं शिशुरपि सतां नन्दगोपस्य सूनुः**
**प्रायः शैलः प्रतिनिधिरसौ पद्मनाभस्य पुंसः।**
**किं नः साध्यं सुरपतिमुखैः किंपचानैस्तदन्यैः**
**साकं दारैरिति किल जगुस्तत्र संभूय गोपाः ॥**

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
यादवाभ्युदये महाकाव्ये
सप्तमः सर्गः।

**नाथ इति**। सोऽय नन्दगोपस्य सूनु.। शिशुरपि बालोऽपि। सता नाथ साधूना रक्षकः। असौ शैल गोवर्धन। प्रायः नूनम्। पद्मनाभस्य पुस नारायणस्य। प्रतिनिधिः सदृशः। तदन्यैः तदुभयव्यतिरिक्तै।

सुरपतिमुखैः किंपचानैः इन्द्रप्रभृतिभिः क्षुद्रैः । 'कदर्ये कृपणक्षुद्रकिंपचानमितंपचाः' इत्यमरः । नः अस्माकम् । किं साध्यम् । न किमपीत्यर्थः । इति उक्तप्रकारेण । तत्र बृन्दावने । गोपाः । संभूय । दारैः साकं स्त्रीजनैः सह । सर्वैरेकवाक्यतया, जगुः गायन्ति स्म किल । मन्दाक्रान्तावृत्तम् ॥ १०९ ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनुना अप्पय्यदीक्षितेन विरचिते यादवाभ्युदयव्याख्याने

**सप्तमः सर्गः ।**

ऋतुप्रभेदैरनुभूय रेमे
रामासखो राममनुप्रयातः ॥ २ ॥

**अनेकेति** । स्वयम् एकरूपः स्वतो निरतिशयानन्दैकरूपः । अकालकाल्य कालेन कालयितुं क्षेप्तुमशक्यः, कालप्रयुक्तजरादिदोषैरनभिभाव्य इति यावत् । रामाणां नीलादीनां सखा ताभिः सहितः । राममनुप्रयातः बलदेवानुवर्ती कृष्णः । अनेकरूपैः ऋतुप्रभेदैः वसन्तग्रीष्मादिऋतुविशेषैः । कालात्मकं रूपम् अनुभूय रेमे । नीलादीनां बलदेवस्य च प्रीत्यर्थं वसन्तादिरूपेण कालात्मकं रूपं गृहीत्वा चिक्रीडेत्यर्थः । 'ततः कालात्मको योऽसौ तवांशः कथितो हरे' इत्यादौ कालस्य भगवद्रूपभेदत्वं प्रसिद्धम् । वसन्तप्रसङ्गात्सर्वर्तुविषयमिदमुक्तम् ॥ २ ॥

हेमन्तपूर्वः शिशिरान्तिमश्च
शरच्च संभूय वसन्तवृत्त्या ।
शनैः शनैः शान्तिमुपेयिवांस-
स्तद्वैभवात्तन्मयतामिवापुः ॥ ३ ॥

ऋत्वन्तराणां हिमवृष्ट्यादिबहुलत्वाद्वसन्तवत्क्रीडोपयोगित्वं नेत्याशङ्क्याह—**हेमन्तेति** । हेमन्तसहितः पूर्वः हेमन्तपूर्वः । पूर्वर्तुर्वर्षर्तुर्विवक्षितः, तस्य हेमन्तसंनिधापितदक्षिणायनप्रथमावयवत्वात् हेमन्ताद्व्यवहितपूर्वत्वाद्वा; अव्यवहितायाः शरदः पृथग्ग्रहणेन व्यवहितपूर्वग्रहणौचित्यात् । शिशिरसहितोऽन्तिमः । अत्रान्तिमो ग्रीष्मो विवक्षितः, तत्र शिशिरसंनिधापितोत्तरायणान्तिमावयवत्वात् शिशिराद्व्यवहितान्तिमत्वाद्वा । उभयत्र मध्यमपदलोपी समासः । एवं लब्धाश्चत्वारः ऋतवः शरच्चेति पञ्चापि ऋतवः, वसन्तवृत्त्या बृन्दावनगतया सह । शनैः शनैः अतिमृदु

स्वस्वोचितसमयानतिक्रमेण । सभूय सगत्य । शान्ति स्वस्वप्रयुक्तहि मवृष्टयातपोद्रेकादिदोषस्खलनम् । उपेयिवास प्राप्ता सन्त । 'पुमान्स्त्रिया' इति पुल्लिङ्गशेषता । तद्वैभवात् कृष्णस्य माहात्म्यात् । तन्मयता वसन्तमयताम् । आपुरिव । एतदुक्त भवति— वक्ष्यमाणपुष्पावचयभगवत्क्रीडोपयोगितया बृन्दावन प्रविष्टे (वसन्ते) स्थायिन्यनुवर्तमाने (ना) ग्रीष्मादय स्वस्वोचितसमयेषु बृन्दावन प्रविशन्त स्वस्वपुष्पादिभिरेव विशेषका बभूवु । निर्दोषत्वेन तु वसन्ततुल्या बभूवुरिति ॥ ३ ॥

**प्रायेण पञ्चायुधपञ्चवक्त्रैः**
**पलाशकोशाकृतिमाददानैः ।**
**मनस्विनीमानगजेन्द्रभेदा-**
**त्सशोणितैः पाणिरुहैश्चकाशे ॥ ४ ॥**

**प्रायेणेति** । पञ्चायुध एव पञ्च विस्तीर्ण वक्त्र यस्य स पञ्चवक्त्र सिंह । प्रायेण पलाशकोशाकृतिम् आददानै पलाशमुकुलाकार गृह्णद्भि । मनस्विनीना मानस्य ईर्ष्याकृतकोपस्यैव गजेन्द्रस्य भेदात् विदारणात् । सशोणितै सरक्तै । पाणिरुहै नखै । चकाशे । अत्र पलाशकोशाकृतिमित्यपह्नुत्या पाणिरुहत्वोत्प्रेक्षणात्**सापह्नवोत्प्रेक्षा** पञ्चायुधपञ्चवक्त्र इत्यादि**रूपको**त्थापितेति सकर ॥ ४ ॥

**जगन्ति पुण्ड्रेक्षुशरासनेन**
**प्रसूनबाणैरपि जेतुमिच्छोः ।**
**असूचयन्नात्मभुवः स्वनादै-**
**रव्याहतामाशिषमन्यपुष्टाः ॥ ५ ॥**

**जगन्तीति** । अन्यपुष्टाः कोकिलाः । स्वनादैः । पुण्ड्र इतीक्षुः पुण्ड्रेक्षुः तेनैव शरासनेन । प्रसूनैरेव बाणैरपि । जगन्ति जेतुमिच्छोः दुःसाधकृत्ये प्रवर्तमानस्य । आत्मभुवः मनोभवस्य । अव्याहताम् आशिषम् अप्रतिहतां जयाशिषम् । असूचयन् व्यञ्जयन्ति स्म । कोकिलध्वनिष्वाशीर्वचनत्वारोपस्य मदनजैत्रयात्रोपयोगात्**परिणामालंकारः** ॥ ५ ॥

> **वराङ्गनावक्त्रपदाम्बुजानां**
> **स्वाभाविकीं सौरभरागलक्ष्मीम् ।**
> **प्रपित्समानौ प्रसवैस्तदर्हं**
> **द्वेधा द्रुमौ दोहदमन्वभूताम् ॥ ६ ॥**

**वराङ्गनेति** । वराङ्गनानां वक्त्राणि पदाम्बुजानि च तेषाम् । समस्यमानैकपदरूपपदाम्बुजशब्दस्य प्राण्यङ्गवाचित्वाभावान्नैकवद्भावः । वक्त्राणि च पदानि च वक्त्रपदम्, तदेवाम्बुजानीति वानन्तरं रूपकसमासः । स्वाभाविकी स्वभावसिद्धाम् । सौरभरागलक्ष्मी सौरभारुण्ययोः समृद्धिम् । प्रसवैः पुष्पैः । 'प्रसवो जननेऽनुज्ञापुत्रेषु फलपुष्पयोः' इति वैजयन्ती । प्रपित्समानौ प्रपत्तुमिच्छन्तौ । द्रुमौ वकुलाशोकरूपौ । द्वेधा प्रकारद्वयेन । तदर्हं सौरभरागसङ्क्रमणोचितम् । दोहदं पुष्पोद्गमहेतुद्रव्यप्रयोगं वदनासवगण्डूषसेकचरणाघातरूपम् । अन्वभूताम् । अत्र वकुलाशोकयोर्दोहदानुभवस्य वराङ्गनावदनचरणसौरभारुण्यसङ्क्रान्तिः फलत्वेनोत्प्रेक्ष्यत इति **फलोत्प्रेक्षा** । वक्त्रपदाम्बुजानां सौरभरागाभ्यां यथासंख्यामन्वय इति **यथासंख्यालंकारः** ॥ ६ ॥

> **तीक्ष्णारुणाग्राण्यचिरप्ररोहा-**
> **चकाशिरे चम्पककुद्मलानि ।**

दत्तानि कामोत्सवमङ्गलार्थं
दीपाङ्कुराणीव वसन्तलक्ष्म्या ॥ ७ ॥

**तीक्ष्णेति** । अचिरप्ररोहात् तत्कालनिर्गमनात् । तीक्ष्णारुणाग्राणि । चम्पककुड्मलानि । वसन्तलक्ष्म्या कर्त्र्या । कामोत्सवमङ्गलार्थं वसन्तसमये कामस्योत्सव एव मङ्गलं तस्मै इदं यथा भवति तथा । दत्तानि आरोपितानि । दीपाङ्कुराणीव । चकाशिरे । 'अङ्कुरोऽस्त्री नवोद्भिदि' इत्यमरशेषः ॥ ७ ॥

मुक्तापगामग्नसमुत्थितात्मा
भूयो भजन्पुष्परजोभिषेकम् ।
चचार मन्दं मलयाद्रिवात-
श्चेतोभुवो दृप्त इवौपवाह्यः ॥ ८ ॥

**मुक्तेति** । मुक्तापगामग्नसमुत्थितात्मा मुक्तापगा नाम मौक्तिकप्रभवस्थानभूता नदी ताम्रपर्णी तस्यां मग्नोत्थित आत्मा मूर्तिर्यस्य सः । एतेन शैत्यमुक्तम् । पुष्परजोभिषेकं कुसुमधूलिभिरभिषेकम् । भूयो भजन् अत्यर्थं सेवमानः । एतेन सौरभ्यमुक्तम् । मलयाद्रेर्वातो दक्षिणानिलः । मनोभुवः । दृप्तः मदगर्वितः । औपवाह्यः राजाधिरोहणीयो गज इव । मन्दं चचार । 'राजवाह्यस्त्वौपवाह्यः' इत्यमरः । गजोऽपि स्नातोत्थित एव गात्रेषु भूयः पुनरपि रजो विक्षिपतीति भावः ॥ ८ ॥

पुष्पेषु संयोगवियोगवृत्त्या
क्रमाद्भजन्ती नतिमुन्नतिं च ।

वनान्तरे षट्पदपङ्क्तिरासी-
न्मञ्जुस्वना मन्मथचापमौर्वी ॥ ९ ॥

**पुष्पेष्विति** । वनान्तरे वनावकाशे । पुष्पेषु कुसुमेषु । सयोगवियोगवृत्त्या क्रमात् नतिम् उन्नतिं च भजन्ती सयोगे निलयनरूपां नतिं वियोगे उत्पतनरूपामुन्नतिं च भजन्ती, मौर्वीपक्षे पुष्पाण्येवेषवः तत्संयोगे आकर्षणेन नतिं तद्वियोगे यथापूर्वमुन्नतिं च भजन्ती । मञ्जुस्वना । षट्पदानां पङ्क्तिः । मन्मथचापमौर्वी । आसीत्, तद्वन्मदनोद्दीपनहेतुरासीदित्यर्थः ॥ ९ ॥

वसन्तक्लृप्तान्मदनस्य बाणा-
नान्दोलयन्नूनमनोकहेषु ।
दिने दिने दक्षिणमातरिश्वा
गतागताभ्यां गणयांचकार ॥ १० ॥

**वसन्तेति** । अनोकहेषु वृक्षेषु । दक्षिणमातरिश्वा मलयमारुतः । वसन्तेन क्लृप्तान्निर्मितान् । मदनस्य बाणान् पुष्परूपान् । दिने दिने । गतागताभ्याम् । आन्दोलयन् संचलयन्सन् । नून गणयांचकार संख्यातवान् । ( नियुक्ता राजार्थे कर्मकरेण) कृतान्बाणान्गच्छन्तः प्रत्यागच्छन्तश्च यथा गणयन्तो विमृशन्ति, तद्वदिति भावः ॥ १० ॥

आघूर्णमानैरभितो नभस्वा-
न्कान्तैः प्रदीपैरिव कर्णिकारैः ।
वनश्रियो माधवसंगमार्हं
मङ्गल्यनीराजनमाचचार ॥ ११ ॥

**आघूर्ण्यमानैरिति** । नभस्वान् वायुः । अभितः आघूर्ण्यमानैः परितो भ्राम्यमाणैः । कान्तैः । कर्णिकारैः द्रुमोत्पलकुसुमैरेव प्रदीपैः । वनश्रियः । माधवसंगमार्हं वसन्तपरिणयनोचितम् । मङ्गल्यनीराजनं मङ्गलारात्रिकम् । आचचारेवेति इवकारो भिन्नक्रमः, नीराजनाचरणस्योत्प्रेक्षितत्वात् ॥ ११ ॥

**प्रसूनहासाधरपल्लवानां**
**किञ्जल्करोमाञ्चजुषामभुङ्क्त ।**
**मन्दानिलैराहितवेपथूनां**
**कान्तिं वसन्तो वनवल्लरीणाम् ॥ १२ ॥**

**प्रसूनेति** । वसन्तः । प्रसूनहासाधरपल्लवानाम् । प्रसूनान्येव हासा येषु तथाभूता अधरपल्लवा यासां तासाम् । किंजल्करोमाञ्चजुषाम् किंजल्का एव रोमाञ्चाः तान् जुषां भजन्तीनाम् । मन्दानिलैः आहितवेपथूनां कृतकम्पानाम् । वनवल्लरीणां वनलतानाम् । कान्तिम् । अभुङ्क्त तादृशीर्वनलताः समाश्लिष्य स्थित इत्यर्थः । 'वल्ली च वल्लरी च' इति शब्दरत्नाकरः । अत्र हासादिविशेषणसाम्याद्वनलतानां वसन्तस्य च दम्पतित्वव्यवहारप्रतीतेः **समासोक्तिरलंकारः** ॥ १२ ॥

**विहारयोग्यामथ वीक्ष्य वन्यां**
**रमापतिं रामसखं विशन्तम् ।**
**नभश्चरैः साकमनोकहास्तं**
**नाथं प्रसूनोर्मिभिरभ्यषिञ्चन् ॥ १३ ॥**

**विहारेति** । अथ वसन्तप्रादुर्भावानन्तरम् । वन्यां वनराजिम् । समूहार्थे यत्प्रत्ययः । विहारयोग्यां पुष्पपल्लवादिसमृद्ध्या क्रीडोचिताम् ।

वीक्ष्य । विशन्त विहाराय प्रविशन्तम् । रामसख बलदेवसहितम् । नाथं स्वामिनम् । रमापतिं कृष्णम् । नभश्चरैः दिविचरैः सुरैः सार्धम् । अनोकहाः वृक्षाः । प्रसूनोर्मिभिः पुष्पसमृद्धिभिः । अभ्यषिञ्चन् अभिषिञ्चन्ति स्म । तत्प्रवेशसमये नभश्चरा वनवृक्षाश्चोभयेऽपि पुष्पवृक्षैरवाकिरन्नित्यर्थः ॥ १३ ॥

**पुष्पाकरेण प्रतिपन्नशोभं**
**बृन्दावनं नन्दितगोपबृन्दम् ।**
**प्रदर्शयन्प्रापितधेनुवत्सं**
**रामानुजो राममिदं बभाषे ॥ १४ ॥**

**पुष्पेति** । रामानुजः कृष्णः । पुष्पाकरेण प्रतिपन्नशोभ वसन्तेन लब्धकान्ति । नन्दितगोपवृन्द प्रीणितगोपालसमूहम् । प्रापितधेनुवत्सं प्रापिता धेनवो वत्साश्च यत्तत् । बृन्दावन प्रदर्शयन्सन् । राम बलदेवम् । इद वक्ष्यमाणम् । बभाषे ॥ १४ ॥

**मनोभुवो मूर्तमिवावलेपं**
**मान्यं मनस्कारमिव त्वदीयम् ।**
**चिरं त्वया सेव्यमिहार्य मन्ये**
**चित्रं वनं चैत्ररथाभिनन्द्यम् ॥ १५ ॥**

**मनोभुव इति** । हे आर्य अग्रजेति संबोधने । 'विप्रामात्याग्रजास्त्वार्याः' इति प्रकाशः । इह भुवि । मनोभुवः मन्मथस्य । मूर्तं विग्रहवन्तम् । अवलेपं गर्वमिव स्थितम् । उद्दीपकतया तज्जृम्भणहेतुत्वात्तथोत्प्रेक्षा । मान्यं पूज्यम् । त्वदीयम् । मनस्कारं चित्ताभोगमिव

स्थितम् । एकस्मिन्विषये पुनः पुनर्मनसः प्रवृत्तिर्मनस्कार. तमिव, तदीयमनस्कारविषयत्वात्तथोत्प्रेक्षा । 'चित्ताभोगो मनस्कारः' इत्यमर· । चित्रम् आश्चर्यमद्भुतम् । चैत्ररथादभिनन्द्य कुबेरोद्यानादपि श्लाघनीयम् । वनम् । चिरम् त्वया । सेव्यम् । मन्ये इति तत्वादरातिशयसूचनम् ॥

**अमानुषप्राप्यमरण्यमेत-**
**त्प्राप्तस्य ते पादरजःप्रभावात् ।**
**सत्त्वोपपन्ना न भजन्ति सत्त्वाः**
**शान्ताशयाः शाश्वतिकं विरोधम् ॥ १६ ॥**

**अमानुषेति** । अमानुषप्राप्य दुष्टबाहुल्येन मनुष्यैरधिगन्तुमशक्यम् । एतत् । अरण्यम् । प्राप्तस्य । ते तव । पादरज प्रभावात् । शान्ताशया उपशान्तमानसा । सत्त्वोपपन्ना उपपन्नसत्त्वा महाबला । सत्त्वा व्याघ्रादिजन्तव । शाश्वतिक नित्यसिद्ध नैसर्गिकमपि । विरोधम् । न भजन्ति ॥ १६ ॥

**अचिन्त्यभूम्नस्तव संनिधाना-**
**दन्योन्यजातीयदशां दधानाः ।**
**सिंहीवशास्तन्यविदो भजन्ते**
**सुभ्रातृतां केसरिदन्तिपोताः ॥ १७ ॥**

उक्तमेवार्थ प्रपञ्चयति— **अचिन्त्येति** । अचिन्त्यभूम्न· अप्रतर्क्यप्रभावस्य । तव । सनिधानात् । अन्योन्यजातीयदशा परस्परमैकजात्यदशाम् । 'जात्यन्ताच्छ बन्धुनि' इति स्वार्थे च्छप्रत्यय । दधाना धारयन्तः । केसरिदन्तिपोता· सिंहानां गजाना च शाबका । सिंहीवशा-

स्तन्यविदः सिंहीकरिण्युभयस्तन्यपायिनः सन्तः । सुभ्रातृतां सौभ्रात्रम् । भजन्ते ॥ १७ ॥

**त्वदर्पितस्वादुतृणादिनीनां**
**त्वद्वंशनादामृतपायिनीनाम् ।**
**मन्ये गवां वत्सगणावृतानां**
**विष्वग्वनं विश्रमयोग्यमेतत् ॥ १८ ॥**

**त्वदर्पितेति** । एतत् । वनम् । त्वदर्पितस्वादुतृणादिनीनां त्वद्दत्तानि मधुराणि तृणानि भक्षयन्तीनाम् । त्वद्वंशनादामृतपायिनीनां तव वेणोर्नादमेवामृत पिबन्तीनाम् । वत्सगणैरावृतानाम् । गवाम् । विष्वक् समन्ततः । विश्रमयोग्यं विश्रान्तेरुचितम् । मन्ये । अतो गोषु वत्सलेन त्वयैतदेव वन सेव्यमिति भावः ॥ १८ ॥

**वसन्तलक्ष्म्या इव वासभूमिं**
**संकल्पयोनेरिव शिल्पशालाम् ।**
**रतेरिवारामविभूतिमन्यां**
**वन्यामिमां वेद्मि तवोपकार्याम् ॥ १९ ॥**

**वसन्तेति** । वसन्तलक्ष्म्याः । वासभूमिम् इव । संकल्पयोनेः मन्मथस्य । शिल्पशालाम् इव । रतेः मन्मथप्रियायाः । अन्याम् अन्यादृशीमनिर्वचनीयरूपाम् । आरामविभूतिं क्रीडावनसमृद्धिम् इव च स्थिताम् । सदा पुष्पपल्लवादिसमृद्धया आद्योत्प्रेक्षा, उद्दीपकबाहुल्यादनन्तरोत्प्रेक्षाद्वयम् । इमाम् । वन्यां वनराजिम् । तव । उपकार्यां विहारोचित राजसदन वेद्मि । उपकर्येति वृद्धययुक्तं केचिदाहुः । तथा विश्वप्रकाशः 'उपकर्या राजसद्मन्युपकारोचितेऽन्यवत्' इति ॥ १९ ॥

वनस्थलीयं मकरन्दवर्षै-
रतोयकर्मान्तिकमात्तसेका ।
प्रस्तौति पर्याप्तपरागजाला
समीहितं संचरणोत्सवं ते ॥ २० ॥

**वनस्थलीति** । मकरन्दवर्षैः पुष्परसवृष्टिभिः । अतोयकर्मान्तिकम् । कर्मणामन्तो निश्चयोऽस्मिन्निति कर्मान्तिकोऽध्यक्षः । 'स्थायिकर्मान्तिकाध्यक्षाः' इति हलायुधः । तोयकर्मान्तिकः तरूणां तोयप्रदानाध्यक्षः । तद्रहितं यथा तथा । आत्तसेका । पर्याप्तपरागजाला समग्रपुष्पधूलीनिकरा। इयम् । वनस्थली । समीहितम् अभिलषितम् । ते तव । सचरणोत्सवम् । प्रस्तौति प्रस्तावयतीति ण्यर्थान्तर्भावो द्रष्टव्यः । राजसञ्चारोचितमार्गसेकपुष्परेणुनिकरसपत्तिदक्षेति भावः ॥ २० ॥

नभःस्पृशामत्र महीरुहाणां
नीडादमी निष्पतिताः सलीलम् ।
प्रयुञ्जते स्वागतमञ्जसा ते
प्रायः शुभालापजुषः शकुन्ताः ॥ २१ ॥

**नभःस्पृशामिति** । अत्र वने । नभःस्पृशाम् अभ्रंलिहानाम् । महीरुहाणाम् । नीडात् कुलायात् । सलीलं सविलासम् । निष्पतिताः निर्गताः । शुभालापजुषः । शकुन्ताः पक्षिणः । प्रायः नूनम् । ते । स्वागतं कुशलप्रश्नम् । अञ्जसा झटिति । प्रयुञ्जते, त्वय्यागते विलम्बायोगादिति भावः ॥ २१ ॥

वातावधूतास्तरवः स्वमूर्ध्ना
संतानसांतानिकसंपदस्ते ।

प्राज्यैरमी पुष्पफलैश्च नूनं
वितन्वते वन्दनमर्हणां च ॥ २२ ॥

**वातेति** । सतानसांतानिकसंपदः संतानवृक्षस्य सताने वशे भवानां सपदिव संपत् समृद्धिर्येषां ते । तरवः । वातावधूताः सन्तः । शिरसा अग्रेण । प्राज्यैः बहुभिः । पुष्पफलैः । च । ते । वन्दनम् । अर्हणां पूजां च । नूनम् । वितन्वते । पवनकम्पिताग्रतया नमस्कारं तत एव मुच्यमानानेकपुष्पफलतया पूजां च कुर्वन्तीवेत्युत्प्रेक्षा । पुष्पसहितैः फलैरिति मध्यमपदलोपिसमासः । द्वन्द्वे तु 'जातिरप्राणिनाम्' इत्येकवद्भावः स्यात् ॥ २२ ॥

आस्वाद्य चूताङ्कुरमन्यपुष्टाः
प्रायः स्वनैः पञ्चममुद्गिरन्तः ।
आकारयन्तीव वनं गतं त्वां
दिव्यानमी दर्शयितुं प्रदेशान् ॥ २३ ॥

**आस्वाद्येति** । चूताङ्कुरं चूतपल्लवम् । आस्वाद्य । प्रायः बहुतरम् । स्वनैः आलापैः । पञ्चमम् उद्गिरन्तः पञ्चमगिरमुत्पादयन्तः । अमी । अन्यपुष्टाः परपुष्टाः कोकिलाः । वनम् । गतं प्राप्तम् । त्वाम् । दिव्यान् प्रदेशान् परिचितान्प्रदेशान् । दर्शयितुम् । आकारयन्तीव आह्वयन्तीव ।' 'दिव्यं लवङ्गके क्लीब वल्गौ दिविभवेऽन्यवत्' इति विश्वः ॥ २३ ॥

त्वत्पादविन्यासविशेषधन्या-
मापादयिष्यन्त इवात्मधात्रीम् ।

एनां स्वशाखाग्रकरप्रयुक्तैः
प्रचिन्वते भूमिरुहाः प्रसूनैः ॥ २४ ॥

**त्वत्पादेति**। भूमिरुहाः वृक्षाः। आत्मधात्रीम् आत्मभूमिम्। त्वत्पादविन्यासविशेषधन्यां त्वत्कटाक्षपातेन सत्यपि धन्यत्वे त्वच्चरणनिधानेन विशेषतो धन्याम्। आपादयिष्यन्तः करिष्यन्तः इव। स्वशाखाग्रैरेव करैः प्रयुक्तैः विकीर्णैः। प्रसूनैः कुसुमैः। एनाम् आत्मभूमिम्। प्रचिन्वते प्रचितामुपचितां कुर्वन्ति। तव सञ्चारार्थं मार्गपुष्पक्षेपरूपराजोपचारं कुर्वन्तीवेत्यर्थः ॥ २४ ॥

निशामयन्त्यो वनदेवतास्त्वां
चकोरसंमोहनचारुदीप्तिम्।
प्रीतिं प्रभूतां परिवाह्य गीतैः
शीताश्रुणा शेषमिवोद्वमन्ति ॥ २५ ॥

**निशामयन्त्य इति**। चकोरसंमोहनचारुदीप्तिं चन्द्रिकाभ्रान्तिजननेन चकोराणां संमोहनी चारुदीप्तिर्यस्य तम्। त्वाम्। निशामयन्त्यः पश्यन्त्यः। वनदेवताः। प्रभूतां बह्वीम्। प्रीतिम्। गीतैः तद्विषयैर्गानैः। परिवाह्य परिवहन्तीं कृत्वा। यथा पूर्णतटाकं परिवाहवन्तं कुर्वन्ति, तथा कृत्वेत्यर्थः। शीताश्रुणा आनन्दशीतलेन बाष्पेण। शेषम् उद्वमन्ति परिवाहेणाप्यमान्तं कंचिदंशमुद्गिरन्तीव। अत्र गीतानां प्रीतिपरिवाहत्वोत्प्रेक्षानुप्राणितः शीताश्रुशेषत्वोत्प्रेक्षालंकारः ॥ २५ ॥

रसालरम्भादिभवैरिहैताः
फलद्रवैः पिच्छिलपार्श्वभागाः।

वत्सावगाह्या वनराजिमध्ये
पूर्णाः सुधाया इव भान्ति कुल्याः ॥ २६ ॥

रसालेति । इह वनराजिमध्ये । रसालरम्भादिभवैः चूतकदल्यादिप्रभवैः । फलद्रवैः फलानां रसैः । पिच्छिलपार्श्वभागाः चिक्कणपार्श्वप्रदेशाः । वत्सावगाह्याः अगभीरतया वत्सानामवगाहनोचिताः । कुल्याः कृत्रिमाल्पसरितः । सुधायाः पूर्णा इव भान्ति अमृतोपमानरसा इत्यर्थः । सुधाया इति सबन्धसामान्ये षष्ठी ॥ २६ ॥

कह्लारपद्मोत्पलकान्तिभिस्ते
कटाक्षविक्षेपगुणं भजन्त्यः ।
अरण्यभागानभितः प्रवाहै-
राप्याययन्त्याप इमाः प्रसन्नाः ॥ २७ ॥

कह्लारेति । कह्लारपद्मोत्पलकान्तिभिः । ते तव । कटाक्षविक्षेपाणाम् अरुणधवलनीलरूपाणाम् । गुण कामनीयकम् । भजन्त्यः । प्रसन्नाः निर्मलाः । इमाः । आपः । प्रवाहैः । अरण्यभागान् । अभितः आप्याययन्ति समन्ताच्छिशिरयन्ति । पद्ममत्र सिताम्भोजं विवक्षणीयम् ॥ २७ ॥

त्वद्वक्त्रपद्मप्रतिमासहस्रैः
संसृज्यमानेव सपुष्करासौ ।
प्रभावतः ख्यापितपुष्करश्रीः
पुण्योदका पुष्करिणी विभाति ॥ २८ ॥

त्वद्वक्त्रेति । सपुष्करा पद्मैः सहिता । अत एव, त्वद्वक्त्रपद्मप्रतिमासहस्रैः भवन्मुखकमलप्रतिबिम्बसहस्रैः । संसृज्यमाना संयुज्यमानेव स्थिता ।

सृज विसर्गे इति दैवादिकाद्धातोः कर्तरि शानच् । प्रभावतः ख्यापितपुष्करश्रीः माहात्म्येन ख्यापितपुष्कराख्यतीर्थसपत् । पुण्योदका । पुष्करिणी खातम् । विभाति । 'पुष्करिण्यां तु खातं स्यात्' इत्यमरः ॥२८॥

**संचारजातैः श्रमवारिलेशै-**
**रालक्ष्यमुक्तागुणमण्डनं त्वाम् ।**
**व्यक्तं नदी वीजयतीयमारा-**
**दम्भोरुहैराश्रितवीचिहस्तैः ॥ २९ ॥**

**संचारेति** । इय नदी यमुना । संचारेण जातैः । श्रमवारिलेशैः आलक्ष्यमुक्तागुणमण्डनं मौक्तिकमालाभिरिव स्वेदबिन्दुपङ्क्तिभिरलकृतम् । त्वाम् । आश्रितः वीचिरेव हस्तो यैस्तैः । अम्भोरुहैः । आरात् समीपे । व्यक्तं स्फुटम् । वीजयति ॥ २९ ॥

**सहन्ति वातातपवर्षवातां-**
**स्तोयेषु तिष्ठन्ति रविप्रतीक्षाः ।**
**तपस्यतस्त्वन्मुखकान्तिलोभा-**
**त्पद्मानिमान्पश्चिमराम मन्ये ॥ ३० ॥**

**सहन्तीति** । हे पश्चिमराम जामदग्न्यरघुनन्दनयोरनन्तरभावित्वात् । इमान्पद्मान् । अर्धर्चादिपाठाद्वैकल्पिकपुंलिङ्गता । त्वन्मुखकान्तिलोभात् । तपस्यतः तपश्चरतः । मन्ये । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यङ्प्रत्ययः । 'तपसः परस्मैपदं च' इति शत्रन्तता । तपश्चर्योत्प्रेक्षानिमित्तम्—वातातपवर्षवातान् सहन्ति वातमातपं वृष्टिवात च सहन्ते । षह मर्षणे इति धातुः 'आ धृषाद्वा' इति विकल्पितचुरादिण्यन्तः परस्मैपदी

युजादौ पठ्यते । तस्य सहन्तीति रूपम् । ये तु वृत्तिकारादयः तत्र तद्धातु नेच्छन्ति तन्मते भौवादिकस्यैव षह मर्षण इति धातोः परस्मैपद-प्रयोग, चक्षिङो ङित्करणाज्ज्ञापकात् अनुदात्तेतामात्मनेपदस्यानित्य-त्वात्। किंच रविप्रतीक्षा. रविमीक्षमाणा.। तोयेषु तिष्ठन्ति । तपस्यन्तो हि शीतोष्णादिसहिष्णवो रविमीक्षमाणाश्च जले वसन्तीति भावः ॥ ३० ॥

**तरङ्गिणीभिः परिरभ्य मुक्तः**
**संलापवान्भृङ्गरवैरधीरैः ।**
**आपृच्छते नूनमतः प्रयातं**
**मन्दीभवन्कुन्दसमीरणस्त्वाम् ॥ ३१ ॥**

**तरङ्गिणीभिरिति** । तरङ्गिणीभि नदीभि । परिरभ्य आश्लिष्य । मुक्त. । अधीरै अनुल्बणै । भृङ्गरवैः । सलापवान् । मन्दीभवन् । कुन्दसमीरण. कुन्दवाटिकाप्रभवो वायु । अत प्रयान्त त्वाम् । नूनम् आपृच्छते सभाजयति । 'आङि नुपृच्छ्योरुपसख्यानम्' इत्यात्मनेपदम् । यथा स्त्रीभिराश्लिष्य विमुक्त वियोगवैक्लव्यात्कातरवचनो मन्दायमानश्च प्रवासोद्यत प्रियसखमापृच्छते तद्वदिति भाव । शिशिरोद्भवस्यापि कुन्दस्य वसन्तारम्भे किंचिदनुवृत्तिरस्तीति कुन्दसमीरण इत्युक्तम् । 'आनन्दन सगत स्यादापृच्छनसभाजने' इति यादव ॥ ३१ ॥

**मनःप्रसादं तव दर्शयन्ती**
**प्रालेयसंघातनिभैः पयोभिः ।**
**शुद्धा नवेन्दीवरनीलवासा-**
**श्छायेव ते शैवलिनी विभाति ॥ ३२ ॥**

**मन इति**। प्रालेयसघातनिभैः तुषारसमूहसदृशैः। पयोभिः जलैः। तव। मनःप्रसादम्। दर्शयन्ती प्रकाशयन्ती, अनुकुर्वतीति यावत्। शुद्धा धवला। नवमिन्दीवरमेव नील वासो यस्याः सा। शैवलिनी नदी। ते च्छायेव प्रतिबिम्ब इव। भाति। प्रतिबिम्बपक्षे दर्शयन्ती ज्ञापयन्तीति योज्यम्। प्रतिबिम्बोऽपि बिम्बसदृशत्वात्स्वच्छोऽन्तःस्वच्छतया बिम्बस्यान्तःस्वच्छतां ज्ञापयतीति भावः॥ ३२॥

**सह प्रयच्छन्ति तव प्रियाभि-**
**श्चञ्चूर्यमाणा इह चक्रवाकाः।**
**आहूय दातार इवातिथेयाः**
**कालोचितां कस्त्वमितीव वाचम्॥ ३३॥**

**सहेति**। इह नद्याम्। प्रियाभिः सह। चञ्चूर्यमाणाः चरन्तः। चक्रवाकाः। आहूय दातारः स्वयमेव आकार्य अन्नप्रदातारः। आतिथेयाः अतिथिषु साधवः आतिथिप्रिया गृहमेधिन इव। कालोचितां तत्समयसमुचिताम्। कस्त्वमिति त्वं भुक्तवान्न वेति। वाचम्। तव प्रयच्छन्तीव। **उपमासंकीर्णोत्प्रेक्षालंकारः**। कस्त्वमिति देशकुलादिप्रश्नपरत्वेन न व्याख्येयम्। 'देशं नाम कुलं विद्यां पृष्ट्वा योऽन्न प्रयच्छति। न तत्फलमवाप्नोति दत्त्वा स्वर्गं न गच्छति' इति निषेधेन तस्यानुचितत्वात्। चञ्चूर्यमाणा इति चरतेर्यङि 'सन्यङोः' इति द्वित्वे 'चरफलोश्च' इति नुमागमे 'उत्परस्यातः' इत्युत्वे च रूपम्। चरतेर्यङो भावगर्हायामेव विधानं तु कवयो नात्यन्तमाद्रियन्ते। आतिथेया इति 'पथ्यातिथिवसतिस्वपतेर्ढञ्' इति साध्वर्थे ढञ्प्रत्ययः॥ ३३॥

विधूतवालव्यजनाः स्वपक्षै-
श्चारुस्वनापादितचाटुवादाः ।
अभिन्नवर्णाः प्रतियन्त्यमी त्वां
राजोपचारैरिव राजहंसाः ॥ ३४ ॥

**विधूतेति** । स्वपक्षैः । विधूतवालव्यजनाः आधूतचामराः । चारुणा स्वनेन स्वशब्देन आपादितचाटुवादाः निष्पादितप्रियवचनाः । अभिन्नवर्णाः एकरूपाः, अन्यत्र अनुपहतस्तुतय. अनुचितस्तुतिरहिता इत्यर्थ 'वर्णो नीलादिविप्राद्योः कीर्तौ गीतक्रमे स्तुतौ' इति यादवः । राजहंसाः हंसविशेषा एव राजश्रेष्ठाः । त्वाम् । राजोपचारैः राजोचितैः सत्कारैरिव । प्रतियन्ति प्रत्यागच्छन्ति ॥ ३४ ॥

दिवापि गोवर्धननिर्झराणां
संछादिते व्योम्नि तुषारजालैः ।
इहातपश्चान्द्रमसेन धाम्ना
विकल्प्यते बोधितपङ्कजोऽपि ॥ ३५ ॥

**दिवेति** । इह बृन्दावने । दिवा दिवसेऽपि । गोवर्धनस्य निर्झराणाम् । तुषारजालैः शीकरसमूहैः । सछादिते । व्योम्नि । आतपः । बोधितपङ्कजोऽपि । चान्द्रमसेन धाम्ना तेजसा विकल्प्यते चन्द्रिकामनुकरोति । निर्झरबिन्दुशीतलत्वादातपोऽपि चन्द्रिकावदेव भवति । पङ्कजोद्भेदनमात्रेण ततो विशिष्यत इति भावः । 'तुषारौ हिमशीकरौ' इति शब्दार्णवः ॥

अतर्कितप्राप्तमवेक्ष्य कान्त्या
मेघंकरं मेचकमम्बरं ते ।

निनादनिष्पादितषड्जगीता
नृत्यन्त्यमी सानुषु नीलकण्ठाः ॥ ३६ ॥

अतर्कितेति। सानुषु गोवर्धनस्य प्रस्थेषु। अमी। नीलकण्ठाः मयूराः। अतर्कितप्राप्तम् अचिन्तितोपगतम्। कान्त्या। मेघकरं मेघानां संपादकम्। 'मेघर्तिभयेषु कृञः' इति खच् मुमागमश्च। ते तव। मेचकमम्बरं नीलांशुकम्। अवेक्ष्य। निनादनिष्पादितषड्जगीताः केंकारवेण सपादितषड्जाख्यस्वरविशेषगानाः सन्तः। नृत्यन्ति। मेघभ्रान्त्येति भावः। षड्जस्वरो मयूररवेषु प्रसिद्धः। यदाहुः 'षड्ज मयूरो वदति गावो रम्भन्ति चर्षभम्। अजाविक तु गान्धारं क्रौञ्चो नदति मध्यमम्। पुष्पसाधारणे काले कोकिलो रौति पञ्चमम्। अश्वस्तु धैवत रौति निषाद रौति कुञ्जरः' इति ॥ ३६ ॥

नदीभिरारब्धतरङ्गलास्यं
नादैर्युतं निर्झरदुन्दुभीनाम्।
गायद्द्विरेफं गिरिणा त्वदर्थे
प्रायेण संगीतमिह प्रयुक्तम् ॥ ३७ ॥

नदीभिरिति। इह वने। गिरिणा गोवर्धनेन। नदीभिः आरब्धतरङ्गलास्यम् उपक्रान्तोर्मिनटनम्। निर्झराणामेव दुन्दुभीनां नादैर्युतम्। गायद्द्विरेफम्। संगीतं नृत्तवाद्यगीतत्रयम्। प्रायेण नूनम्। त्वदर्थे तुभ्यमिदं यथा भवति तथा। प्रयुक्तम् ॥ ३७ ॥

कलिन्दजाकच्छभुवां सखीभिः
प्रच्छायवन्याभिरधित्यकाभिः।

**सूते गिरिः सूचितनन्दनोऽसौ**
**स्वर्गौकसां स्वैरविहारवाञ्छाम् ॥ ३८ ॥**

**कलिन्दजेति** । कलिन्दजाकच्छभुवां यमुनानूपप्रदेशानाम् । सखीभिः सनिकृष्टाभिः अनेन शीतलत्वं द्योतितम् । प्रच्छायवन्याभिः प्रकृष्टच्छायावद्वनराजिभिः । अधित्यकाभिः । सूचितनन्दनः अनुकृतेन्द्रोद्यानः । असौ गिरिः गोवर्धनः । स्वर्ग ओको येषां तेषाम् । स्वैरविहारवाञ्छाम् अनियन्त्रितक्रीडेच्छाम् । सूते उत्पादयति । नन्दनोद्यानकलिते स्वर्ग इवात्र विहारेच्छा युक्तेति भावः ॥ ३८ ॥

**अभ्यागतं वीक्ष्य भवन्तमारा-**
**त्साला इमे सामिनताग्रशाखाः ।**
**सुधारसस्वादुतमानि भक्त्या**
**स्वयं प्रयच्छन्ति फलानि धन्याः ॥ ३९ ॥**

**अभ्यागतमिति** । धन्याः सुकृतिनः । इमे । सालाः वृक्षाः । 'अनोकहः कुटः सालः' इत्यमरः । आरात् समीपे । 'आराद्दूरसमीपयोः' इत्यमरः । अभ्यागतम् आभिमुख्येनागतम् । भवन्तम् । वीक्ष्य । सामिनताग्रशाखाः अर्धावनमितशाखाग्राः सन्तः । सुधारसस्वादुतमानि सुधारसवदतिशयेन स्वादूनि । फलानि । भक्त्या स्वयं प्रयच्छन्ति । यथा गृहमेधिनः समीपागतमतिथिं वीक्ष्य स्वयकृतेनातिथ्योपचारेण संतर्पयन्ति तद्वदिति भावः ।

**पात्रीभवन्तस्तव वीक्षणानां**
**पद्मालयावासविकल्पितानाम् ।**

**चराचराः कानि कियन्ति वैते**
**तपांस्यतप्यन्त भवान्तरेषु ॥ ४० ॥**

**पात्रीभवन्त इति**। पद्मालयावासविकल्पिताना लक्ष्मीनिवासकमलेन सजातविकल्पाना तत्तुल्यानाम्। तव वीक्षणाना पात्रीभवन्त। एते चराचराः मृगकिरातगिरिनदीप्रभृतयो जङ्गमस्थावरा। भवान्तरेषु जन्मान्तरेषु। अन्ये भवा भवान्तराणि। 'सुप्सुपा' इति समास। कानि किंरूपाणि। कियन्ति किंपरिमाणानि। तपासि। अतप्यन्त तप्तवन्त. आर्जितवन्त इत्यर्थ.। 'तपस्तप कर्मकस्यैव' इति कर्मवद्भावविधानाद्यगात्मनेपदे। अन्यादृशान्यतिबहूनि तपासि विना त्वद्वीक्षणगोचरीभावो दुर्लभ इति भाव ॥ ४० ॥

**विजानतां सत्पुरुषप्रभावं**
**पुंसाममी पुण्यतमीभवन्तः।**
**प्रायस्त्वदङ्गीकरणात्प्रयास्य-**
**न्त्याराध्यतामद्रिवनावकाशाः ॥ ४१ ॥**

**विजानतामिति**। त्वदङ्गीकरणात् तव सचारभूमित्वेन स्वीकारात्। पुण्यतमीभवन्त अतिशयेन पवित्रीभवन्त। अमी अद्रिवनावकाशा। सत्पुरुषप्रभाव भवादृशाना महापुरुषाणा महिमानम्। विजानताम् पुसाम्। प्रायः बहुतरम्। आराध्यता पूज्यताम्। प्रयास्यन्ति ॥ ४१ ॥

**संस्कारपूताभिरितीव वाग्भिः**
**संमोदयन्नग्रजमादिदेवः।**

विजातलीलो विजहार हृष्य-
न्वन्द्यः सतां वत्सगणानुयायी ॥ ४२ ॥

**संस्कारेति** । इति इत्थम् । इवेति वाक्यालंकारे । इत्यर्थे इतीवेति निपातो वा । संस्कारपूताभिः व्याकरणसंस्कारेण परिशुद्धाभिः । वाग्भिः । अग्रजं बलदेवम् । समोदयन् । सतां वन्द्यः । वत्सगणानुयायी स्ववत्सगणानुसरणशीलः । आदिदेवः कृष्णः । विजातलीलः वयस्यैः संजातनर्मा । हृष्यन्सन् विजहार ॥ ४२ ॥

स्वयंवृतः स्वैरविहारलक्ष्म्या
मुहुर्वितेने विपिने मुकुन्दः ।
स्थानान्तरप्राप्तिविभावितानि
स्थितेरभिन्नानि गतागतानि ॥ ४३ ॥

**स्वयंवृत इति** । विपिने । स्वैरविहारलक्ष्म्या यथेष्टक्रीडासंपदा । स्वयंवृतः स्वयंवरेण प्राप्तः, तद्वशं गतः । मुकुन्दः । स्थितेरभिन्नानि स्थित्यविशिष्टानि । स्थानान्तरप्राप्तिविभावितानि स्थलान्तरप्राप्त्या ज्ञापितानि । गतागतानि । मुहुः । वितेने क्रीडारसपारवश्याद्दूरगमनागमनान्यपि तदा न प्रतीतानि, किंतु देशान्तरप्राप्त्या लिङ्गेन एतावद्दूरमागतमिति पश्चाज्ज्ञापितानीत्यर्थः ॥ ४३ ॥

प्रभूतया पुष्पफलप्रसूत्या
वदान्यवृत्तीनि वनानि दृष्ट्वा ।
सस्मार चिन्तावशवर्तिनीनां
व्रजस्थितानां वरवर्णिनीनाम् ॥ ४४ ॥

**प्रभूतयेति**। प्रभूतया बहुलया। पुष्पफलानां प्रसूत्या उत्पादेन। वदान्यवृत्तीनि बहुप्रदस्वभावानि। वनानि दृष्ट्वा। चिन्तावशवर्तिनीनां स्वविषयचिन्तापरवशानाम्। व्रजस्थितानाम्। वरवर्णिनीनां सुन्दरीणाम्। सस्मार स्मृतवान्। 'अधीगर्थदयेशां कर्मणि' इति शेषत्वेन विवक्षिते कर्मणि षष्ठी ॥ ४४ ॥

**प्रायस्तदाह्वानविधौ नियोक्तुं**
**प्रगृह्य वेणुं प्रतिपन्नदूत्यम्।**
**न्यवेशयत्कुट्मलिते सलीलं**
**बिम्बाधरे सूचितचित्तरागे ॥ ४५ ॥**

**प्राय इति**। स कृष्णः। प्रायः बहुशः। प्रतिपन्नदूत्यं स्वाभिमतवशीकरणक्रियासु प्राप्तदूतकार्यम्। 'दूतवणिग्भ्यां चेति वक्तव्यम्' इति यत्प्रत्ययः। वेणु मुरलीम्। प्रगृह्य तदाह्वानविधौ तासामाकारणकर्मणि। नियोक्तु व्यापारयितुम्। कुट्मलिते मुकुलीकृते। सूचितचित्तरागे अरुणिम्ना प्रकाशितहृदयाभिलाषे। बिम्बाधरे बिम्बसदृशे अधरे। सलील सविलासम्। न्यवेशयत् निवेशयति स्म ॥ ४५ ॥

**सामोपपन्नान्क्रमशः स्वरन्ध्रैः**
**सप्त स्वरान्सप्तभिरुद्वमन्तम्।**
**प्रचक्रमे वादयितुं वनान्ते**
**वंशं प्रियो वल्लववंशजानाम् ॥ ४६ ॥**

**सामेति**। वल्लववंशजानां गोपकुलोत्पन्नसुन्दरीणाम्। प्रियः कृष्णः। वनान्ते। सामोपपन्नान् सामवेदप्रभवान्। सप्त स्वरान् निषादादीन्।

सप्तभिः स्वरन्ध्रैः । क्रमश' पर्यायेण । उद्गमन्तम् । वश वेणुम् । वादयितु प्रचक्रमे । तदीयमुखानिलस्य वेदमयतया तदौचित्येन सामवेदोपपन्नता ॥

**मुकुन्दवक्त्रानिलवाद्यमानो**
**वेणुर्बभौ वेद इव द्वितीयः ।**
**रागावधीनां रहसां यदेकं**
**गीतात्मनां तस्य निदानमासीत् ॥ ४७ ॥**

**मुकुन्देति** । मुकुन्दस्य वक्त्रानिलेन वाद्यमान । वेणु । द्वितीय प्रसिद्धऋग्यजुषादिरूपवेदस्य द्वितीय वेद इव । बभौ । अत्रोत्प्रेक्षाया श्लेषेण निमित्तमाह— रागेति । रागावधीनाम् 'योऽसौ ध्वनिविशेषस्तु स्वरवर्णविभूषित । रञ्जको जनचित्ताना स राग कथितो बुधै ' इत्युक्त-लक्षणा' शृङ्गारादयो (?) रागास्तदवधीना तदुत्कर्षविश्रान्तिभुवाम् । तस्य कृष्णस्य । गीतात्मना भगवद्गीतारूपाणाम् । रहसाम् उपनिषदाम् एक निदानमासीदिति श्लेषलभ्योऽर्थ । यदित्युक्तार्थस्य हेतुत्वे । गीतोपनिषदा वेदैकमूलत्वात्तन्मूलस्य वेदत्व युक्तमिति भाव ॥ ४७ ॥

**तद्वंशनादः सुभगोऽनुगच्छ-**
**न्नग्रेसरन्सौरभमागमानाम् ।**
**अयत्ननिष्पन्नमनःसमाधी-**
**नाब्रह्मकानातनुतेव जन्तून् ॥ ४८ ॥**

**तद्वंशेति** । अग्रेसर पुर.सरम् । आगमाना सौरभ वेदगन्ध निश्वा-सपरिमलम् । अनुगच्छन् । सुभगो हृद्य । तस्य कृष्णस्य वशनाद । आब्रह्म-कान् आ अवधि. ब्रह्मा येषा तान् चतुर्मुखपर्यन्तान् । जन्तून् । अय-

न्ननिष्पन्नमनःसमाधीन् अयत्नलब्धचेतःप्रणिधानानिव। आतनुत चित्तैकाग्र्येण ध्यानपरान् योगिन इवाकरोत् ॥ ४८ ॥

शृण्वद्भिरुद्वान्तमधुप्रवाहं
वंशस्वनं तस्य सुधैकवंशम्।
सयूथ्यतां नूनमवाप्य सर्वैः
सत्त्वैः स्थितं सामिनिमीलिताक्षैः ॥ ४९ ॥

शृण्वद्भिरिति। उद्वान्तमधुप्रवाहम् उद्गीर्णक्षौद्रप्रवाहम्, अतिश्राव्यतया श्रवणेषु क्षौद्ररस वर्षन्तमिव स्थितमित्यर्थः। सुधैकवंशम् अमृतेनैककुल तत्सदृशम्। तस्य कृष्णस्य। वंशस्वनम्। शृण्वद्भिः। सामिनिमीलिताक्षैः श्रवणसुखादर्धनिमीलितलोचनैः। सर्वैः सत्त्वैः व्याघ्रादिभिः। नूनम्। सयूथ्यतां समानयूथभवताम्। अवाप्य स्थितम्। कथमन्यथा व्याघ्रहरिणादीनामेकत्रावस्थानमिति भावः। अनेन तेषां वंशस्वनश्रवणसुखपारवश्यातिशयो व्यज्यते। तिरश्चां सजातीयैः कृतः समूहो यूथम्। 'सजातीयैः कुलं यूथ तिरश्चां पुनपुंसकम्' इत्यमरः। समाने एकस्मिन्यूथे भवाः सयूथ्याः। 'सगर्भसयूथसनुताद्यत्' इति यत्प्रत्ययः समानस्य सभावश्च ॥ ४९ ॥

मधुद्रवैरुल्बणसंमदाश्रू-
ण्यालेख्यनिष्पन्दमृगद्विजानि।
उदग्रकोशोत्पुलकानि कृष्णो
वंशीनिनादेन वनान्यकार्षीत् ॥ ५० ॥

मधुद्रवैरिति। कृष्णः। वनानि बृन्दावनबृहद्वनादीनि। वर्शानि-

नादेन अल्पो वंशो वंशी । 'स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदि' इत्यल्पत्वविवक्षायां स्त्रीलिङ्गता । गौरादित्वान्ङीष् । तस्य शब्देन । मधुद्रवैः उल्बणसंमदाश्रूणि मकरन्दक्षरणैरधिकानन्दबाष्पाणि । आलेख्यनिस्पन्दमृगद्विजानि चित्रलिखितवदस्पन्दमृगशकुन्तानि । उदग्रकोशोत्पुलकानि उन्नतैः कुट्मलैः उद्गतरोमाञ्चानि च । अकार्षीत् । भगवद्वंशनादैर्वनेषु मृगशकुन्ता अस्पन्दा आसन् । वृक्षाश्च मुकुलमकरन्दप्रचुरा अभवन्नित्यर्थः ॥ ५० ॥

आस्वाद्य तद्वंशनिनादमाध्वी-
माघ्राय तत्संचरसौरभं च ।
भुक्तामृतानां भुवि सौरभेय्यः
क्षिप्तेतरां क्षीबदशामवापुः ॥ ५१ ॥

**आस्वाद्येति** । सौरभेय्यः गावः । 'माहेयी सौरभेयी गौः' इत्यमरः । तद्वंशनिनादमेव माध्वीं क्षौद्रम् । आस्वाद्य । तत्संचरसौरभं तन्मार्गपरिमल च । आघ्राय । 'गोचरसंचर' इत्यादिसूत्रेण संचरशब्दो निपातितः । भुक्तामृतानाम् अमृत पीतवताम् । क्षिप्तेतराम् अखण्डाम् । क्षीबदशां मत्तावस्थाम् । भुवि भूलोके । अवापुः । भूलोके हि दुर्लभः सुधामद इति भावः ॥ ५१ ॥

वंशस्वनास्वादवशीकृतानां
व्यक्तोदयानां वनदेवतानाम् ।
स कर्बुरः स्निग्धतमैः कटाक्षैः
सेन्द्रायुधो मेघ इवावभासे ॥ ५२ ॥

वंशेति। कृष्णवंशस्वनस्य आस्वादेन सतृष्णमाकर्णनेन वशीकृतानाम्। अत एव कृष्णदर्शनकौतुकात्, व्यक्तोदयानां स्फुटाविर्भावानाम्। वनदेवतानाम्। स्निग्धतमैः अत्यासङ्गाद्भृशं विषयानुरक्तप्रभैः। 'स्निग्धं तद्यस्य विषयः प्रभाभिर्मिलितो भवेत्' इति भावप्रकाशः। कटाक्षैः। कर्बुरः नीलारुणधवलरूपतया नानावर्णः सन्। सेन्द्रायुधः। मेघ इव। आबभासे ॥ ५२ ॥

आध्मापयामास स शृङ्गमग्र्यं
शङ्खं तथाभूतमिवात्मयोगात्।
जगौ च गेयानि बहूनि येषां
गान्धर्ववेदोऽपि न पारदृश्वा ॥ ५३ ॥

आध्मापयामासेति। सः। अग्र्य श्रेष्ठम्। शृङ्ग शृङ्गरूप मुखवाद्यम्। आध्मापयामास दध्मौ। 'सर्वेभ्यो धातुभ्यः स्वार्थे णिजित्येके' इति स्वार्थे णिच्। कीदृशम्—आत्मयोगात् निजोपायात्प्रभावरूपात्। तथाभूतं शृङ्गाकारेण परिणतम्। शङ्खं पाञ्चजन्यमिव स्थितम्। किंच बहूनि गेयानि। जगौ गायति स्म। येषां गेयानां गान्धर्वशास्त्ररूप उपवेदोऽपि। पारदृश्वा पारदर्शी न भवति ॥ ५३ ॥

त्रिस्थानयुक्तस्वरभूषितं त-
त्त्रिधा स्थितं ग्रामविशेषयोगात्।
अरञ्जयत्सप्त जगन्त्ययत्ना-
द्गीतं हरेराहृतकिंनरौघम् ॥ ५४ ॥

त्रिस्थानेति। त्रिषु स्थानेषु मन्द्रमध्यतारध्वन्युत्पादकेषु उरःकण्ठ-

मूर्धसु सयुक्तैः स्वरैः तत्तत्स्थानोद्भवध्वन्यनुरणननादरूपैः निषादादिभिः भूषितम् । ग्रामः स्वरसमूहः । तस्य विशेषाः षड्जग्रामो मध्यमग्रामो गान्धारग्राम इति त्रयः । तेषा योगात् । त्रिधा त्रिप्रकारेण । स्थितम् । आहृतकिंनरौघम् आनीतकिंनरसंघम् , अनवगतविशेषावगत्यर्थं किंनराणामागमनमिति भावः । एवंभूतं हरेर्गीतं शारीरम् । अयत्नात् यत्नमनपेक्ष्य । सप्त जगन्ति भूर्भुवःसुवरादीन्सप्तापि लोकान् । अरञ्जयत् वशीचकार । अत्र स्थानादिस्वरूपे संगीतसुधानिधिवचनानि—'यत्रोत्पन्नो ध्वनिर्मन्द्रो मध्यस्तारोऽपि वा भवेत् । तच्चेतनाचेतनयोः स्थानमित्यभिधीयते । उरः कण्ठः शिरश्चेति प्रसिद्ध चेतने त्रयम् । अत्रोच्यते स्वराधारश्रुतस्थानोद्भवाद्ध्वनेः । नादोऽनुरणनाकारः स्वरश्चित्तानुरञ्जकः । ग्रामः स्वराणां संदोहो यथोक्तश्रुतिशालिनाम् । षड्जमध्यमगान्धारसंज्ञा ग्रामास्त्रिधा मताः ।' इति । यद्यपि 'गीयते तत्र गान्धारग्रामो भूमौ न केनचित् । स पुनः केवलं ग्रामो गन्धर्वैर्दिवि गीयते ' इति दिव्येव गान्धारग्रामस्य प्रचार उक्तः, तथापि दिव्यगानादप्यतिशयिन्यप्राकृते भगवद्गाने तस्यानुवृत्तिरुपपन्नतरा ॥ ५४ ॥

विलासवाक्यैरिव वेणुनादै-
र्दिव्येन गीतेन च दैत्यहन्तुः ।
निवेदितार्थाः सुहृदः स्ववासा-
दाजग्मुराकर्षणमन्त्रतीक्ष्णैः ॥ ५५ ॥

**विलासेति** । दैत्यहन्तुः कृष्णस्य । विलासवाक्यैरिव स्थितैः । वेणुनादैः । दिव्येन गानेन तस्य शारीरगानेन च । आकर्षणमन्त्रैरिव तीक्ष्णैः तीव्रैः क्षिप्रकारिभिः एतैः । निवेदितार्थाः ज्ञापितक्रीडारूपप्रयोजनाः । सुहृदः । स्ववासात् । आजग्मुः ॥ ५५ ॥

अनिष्टशब्दैर्वलयैरपोढाः
काञ्च्याप्यवज्ञातपदोपगत्या ।
गुणावकृष्टाः प्रियमाप्तुमीषुः
कामोपदिष्टेन महापथेन ॥ ५६ ॥

**अनिष्टेति** । गुणावकृष्टाः भगवत्सौन्दर्यादिगुणैरेव गुणै पाशै आकृष्टा गोप्य. । अनिष्टशब्दै अभिसरणप्रकाशकतया अनभिमतशब्दै । वलयै । अवज्ञातपदोपगत्या अवमतस्वस्थानसबन्धया, स्थानप्रच्युतयेत्यर्थ । काञ्च्यापि । अपोढा व्यपनीता, गमनवेगेन भिन्नैर्वलयै त्रुटितया काञ्च्या च रहिता इत्यर्थ । प्रिय कृष्णम् । आप्तुम् । कामोपदिष्टेन महापथेन । ईषु जग्मु । 'इष गतौ' इति धातुः । कामोपदिष्टो महापथोऽत्राभिसरणमार्गो विवक्षित । तस्मिन्विपथेऽपि महापथ इव निरातङ्क प्रयातितव्यम् । तत पत्युपदिष्टमहापथे यथा पितृगृहमुपगता योषित: तत्र क्रूरभाषणै पुरुषै तदुपगतिमवजानता स्त्रीजनेन चावमानिताश्चेत्ततो निर्गत्य पत्युपदिष्टमहापथमवलम्ब्य पतिं प्राप्नुवन्ति तद्वदिति गम्यते ॥ ५६ ॥

आदिश्यमानां प्रियवंशनादै-
राज्ञां निजाशामिव निर्विघाताम् ।
तदास्थितां प्रास्थिषताशु धन्या-
मासन्नसंध्याधिकरागभाजः ॥ ५७ ॥

**आदिश्यमानामिति** । आसन्नया सनिकृष्टया सध्यया अधिकरागभाजः अधिकमनुराग भजमाना , सायकालस्योद्दीपनविभावत्वात् । ता गोप्य. । प्रियस्य वशनादैः । आदिश्यमाना ज्ञाप्यमानाम् । निर्विघाता

निजाशाम् अप्रतिबन्धमात्मीयानुरागमिव स्थिताम् । स्वानुरागविषयभगवद्योगात्तथोत्प्रेक्षा । धन्यां सुकृतिनीम् । तदास्थिताम् आशां कृष्णाधिष्ठितां दिशम् । आशु प्रास्थिषत । प्रपूर्वादात्मनेपदिनस्तिष्ठतेर्लुङ् । तस्याकर्मकत्वेऽप्यन्तर्भूतोद्देशक्रियापेक्षया दिशः कर्मता ॥ ५७ ॥

**मधुव्रताधिज्यशरासनेन**
**पुष्पात्मकं संदधता पृषत्कम् ।**
**अनुप्लवेन व्रजता बभूवे**
**तासामनङ्गेन तदोद्यतानाम् ॥ ५८ ॥**

**मधुव्रतेति** । तदा । मधुव्रतैः भ्रमरैः अधिज्यमारोपितमौर्वीकं शरासनं यस्य तेन । पुष्पात्मकं पुष्परूपम् । पृषत्कं सायकम् संदधता । अनङ्गेन । उद्यतानाम् अभिसरणोद्युक्तानाम् । तासाम् । व्रजता सहगच्छता । अनुप्लवेन सहचरेण । बभूवे । भावे लिट् । मन्मथ एक एव तासां सहाय आसीदित्यर्थः ॥ ५८ ॥

**आदेशयोगैरथ तत्र गोप्यो**
**निवार्यमाणा अपि दुर्निवाराः ।**
**आनिन्यिरे रागमयैर्महौघैः**
**क्लेशापहं कृष्णसुधापयोधिम् ॥ ५९ ॥**

**आदेशेति** । अथ तासामुद्योगानन्तरम् । आदेशयोगैः कृत्येषु निदेशरूपैरुपायैः । निवार्यमाणाः श्वश्रूमात्रादिभिर्निरुध्यमाना अपि । दुर्निवाराः निवारयितुमशक्याः । गोप्यः । रागमयैः महौघैः रागरूपैः महाप्रवाहैः । क्लेशापहं क्लेशापनोदकम् । कृष्णमेव सुधापयोधिम् । आनि-

न्यिरे प्रापिताः । 'अकथितं च' इति द्विकर्मकस्य नियः प्रापणार्थस्य कर्तृव्यापारप्रापणफलगतिद्वारेण प्राप्यमाणानां गोपीनामीप्सितकर्मत्वात्तत्रैव प्रधानकर्मणि लिट् । 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इति । अत एवाकर्मणो लकारेणानभिहितत्वात्कृष्णमिति द्वितीया । क्लेशापहमिति 'अपे क्लेशतमसोः' इति डप्रत्ययः ॥ ५९ ॥

**त्वरासखीनां पुरतः प्रचेले**
**तरस्विना निःश्वसितेन तासाम् ।**
**सदागतिप्रार्थनया समेतं**
**दूरस्थितं कृष्णमिवोपनेतुम् ॥ ६० ॥**

**त्वरासखीनामिति** । त्वरायाः सखीनां त्वरया सहितानाम् । तासाम् । पुरतः पुरस्तात् । तरस्विना वेगवता । निःश्वसितेन । सदागतिप्रार्थनया समेतम् सदागतयो देवाः । 'सदागतिः स्यात्पवने गीर्वाणे च सदीश्वरे' इति विश्वः । तेषां प्रार्थनया भुवि समागतम् । दूरस्थितं व्रजाद्दूरे यमुनातीरे स्थितम् । कृष्णम् । उपनेतु समीपमानेतुमिव । प्रचेले प्रचलितम् । भावे लिट् । सदागतिशब्देन वायुरपि प्रतीयते । तेन सदागतिना अनेन समीपमानेतुं शक्यते इति युक्तमिति व्यज्यते ॥ ६० ॥

**प्रायेण वेगात्सुदृशां विभिन्नः**
**प्रकीर्णमुक्ताफलपुष्पजालः ।**
**प्रस्तावयन्कामविहारनाट्यं**
**हारः समालक्ष्यत सूत्रधारः ॥ ६१ ॥**

**प्रायेणेति** । सुदृशाम् । प्रायेण भूम्ना वेगात् अत्यन्तवेगात् । 'प्रायो-

भूम्न्यन्तगमने' इत्यमरो विश्वश्च । विभिन्नः छिन्नः । हार । प्रकीर्णमुक्ताफलपुष्पजाल. प्रकीर्णमौक्तिककुसुमनिकरः । कामविहारनाट्यम् हारविच्छेदमप्यविगणय्य आधावन्तीषु तासु कामस्य विहार पारवश्यापादनरूप क्रीडनमेव नाटयम् । प्रस्तावयन् आसूचयन् । सूत्रधार सूत्रमात्र धारयमाण । समालक्ष्यत । सूत्रमात्ररूपत्वेऽपि स्थूणावशिष्ट गृहमितिवद्भेदोपचारः । सूत्रधार इति नाटयेषु नान्द्यनन्तरसचारी नटोऽप्युच्यते । स हि यथा पुष्पाञ्जलिं विकीर्य नाटयस्य प्रस्तावना करोति तद्वदिति गम्यते ॥

अवस्थितं क्वापि कदम्बमूले
वल्गुस्मितं वादितमञ्जुवेणुम् ।
साचीकृताक्षं ददृशुस्तरुण्यः
स्वाद्यं सतां स्वस्तिकचारुजङ्घम् ॥ ६२ ॥

**अवस्थितमिति** । तरुण्य । क्वापि कदम्बमूले नीपवृक्षस्याधोदेशे । अवस्थितम् । वल्गुस्मित मनोहरमन्दहासम् । 'पुण्य वल्गु मनोहारि' इत्यमरशेष । वादितमञ्जुवेणुम् । साचीकृताक्ष वेणुरन्ध्रभेददर्शनाय तिर्यक्कृतलोचनम् । स्वस्तिकेन व्यत्यस्तविन्यासेन चारुजङ्घम् । सता ब्रह्मज्ञानिनाम् । 'अस्ति ब्रह्मेति चेद्वेद सन्तमेन ततो विदु' इति श्रुते । स्वाद्य परमानन्दरूपत्वादास्वादनीय कृष्ण ददृशु. ॥ ६२ ॥

तदङ्गशोभामवलोक्य दिव्यां
विस्मेरभावं व्रजतेव दूरात् ।
अमोहयद्यौवतमादिधूर्तः
संतोषदिग्धेन समीक्षणेन ॥ ६३ ॥

तदङ्गेति । आदिधूर्तः आद्यो वञ्चकः महामायावी कृष्णः । यौवत युवतीनां समूह कर्म । दिव्यां मनोज्ञाम् । तदङ्गशोभां तासामवयवकान्तिम् । अवलोक्य । विस्मेरभावं व्रजतेव विस्मयानुभावविस्फारणाद्यभिनयाद्विस्मयित्वं व्रजता प्राप्तेनेव स्थितेन । सतोषदिग्धेन उपरि सतोषरूषितेन, न त्वान्तररागपरवशेनेति हृदयम् । समीक्षणेन अवलोकनेन । दूरात् अमोहयत् दूरे एव मोहयति स्म । नायकरतिभावानुभावस्याप्युद्दीपनविभावत्वात्तद्दर्शनेनात्यर्थं रागान्धा बभूवुरित्यर्थः ॥ ६३ ॥

द्रुतागतिव्याकुलभूषणास्ताः
किंचित्समुच्छ्वासितनीविबन्धाः ।
पर्याकुलाक्ष्यः परिवार्य तस्थुः
कृष्णं कृपाधीनदृशं कृशाङ्ग्यः ॥ ६४ ॥

द्रुतेति । द्रुतागतिव्याकुलभूषणाः शीघ्रमागमनेन स्वस्वस्थानचलिताभरणाः । किंचित्समुच्छ्वासितनीविबन्धाः रागोद्रेकेण किंचिच्छिथिलीकृतपरिधानग्रन्थयः । पर्याकुलाक्ष्यः अनुचितकर्मत्रासेन प्रतिक्षेपभयेन वा चटुललोचनाः । कृशाङ्ग्यः तन्वङ्ग्यः । कृपाधीनदृश कृपायत्तविलोकनम्, वस्तुतस्तस्य रागपारवश्याभावेऽपि एताः पतिपित्रादीन्सर्वान्परित्यज्य मदेकशरणाः समागता इति कृपाया निघ्नलोचनम् । कृष्णम् । परिवार्य समावृत्य । तस्थुः ॥ ६४ ॥

स वल्लभः संसदि वल्लवीनां
बर्हस्रजा दर्शितदानराजिः ।
उदग्रभृङ्गध्वनिरावभासे
दृप्तो वशानामिव वारणेन्द्रः ॥ ६५ ॥

**स इति** । वल्लवीनां संसदि गोष्ठयाम् । बर्हस्रजा दर्शितदानराजिः पिच्छमाल्येन प्रदर्शितमदरेखः । उदग्र उन्नतः शृङ्गवाद्यस्य ध्वनिः यस्य सः । वल्लभः वल्लवीनां प्रियः कृष्णः । वशानां करिणीनाम् । संसदि । दृप्तो मदगर्वितः । वारणेन्द्र इव । आबभासे । वारणेन्द्रपक्षे उदग्रश्शृङ्गस्य ध्वनिरिव ध्वनिर्यस्येति योज्यम् ॥ ६५ ॥

अवृद्धिसंकोचमिवेन्दुमन्य-
मकार्मुकं काममिवात्तवेणुम् ।
तमद्भुतानामिव राशिमेकं
गोप्यस्तदात्मान इवान्वभूवन् ॥ ६६ ॥

**अवृद्धीति** । गोप्यः । अवृद्धिसंकोचं वृद्धिसंकोचरहितम् । अन्य प्रसिद्धाद्वृद्धिक्षयवतो भिन्नम् । इन्दुमिव । अकार्मुक चापरहितम् । आत्तवेणुं काममिव । अद्भुतानाम् एक राशिमिव सर्वाश्चर्यसमाहारमिव च स्थितम् । तम् । तदात्मान इव स एवात्मा यासां ताः तदात्मानः । निरतिशयेन प्रेम्णा तदैक्यापन्ना इव । अन्वभूवन् ॥ ६६ ॥

सुराङ्गनाभिः समये धृतायां
स्वेनैव गोपाकृतिभूमिकायाम् ।
अकर्मवश्यस्य विभोस्तदासी-
दर्चाफलस्पर्शनमात्रलीला ॥ ६७ ॥

ननु कथमेवं भगवतः परदाराभिमर्शने प्रवृत्तिरिति शङ्कां श्लोकत्रयेण परिहरति— **सुरेति** । अकर्मवश्यस्य कर्मणामवशंवदस्य पुरुषान्तरवत्कर्मभिः क्वचित्प्रेरयितुमशक्यस्य । विभोः कृष्णस्य । सुराङ्गनाभिः दिव्य-

स्त्रीभिः सह । समये सविदि । स्वेनैव कर्माद्यधीनत्वं विना । धृतायाम् । गोपाकृतिरूपायां भूमिकायां वेषकल्पनायाम् । अर्चाफलस्पर्शनमात्रलीला तत्पूजाफलदानमात्ररूपा लीला । तदा आसीत् । पुरा किल दिव्ययोषितो भगवत्सौन्दर्यवशीकृतास्तदुपभोगसिद्धिमुद्दिश्य तमेवार्चयामासुः । ततः प्रसन्नो भगवान्भूमाववतीर्य गोपभूमिकामवलम्ब्य भवतीनामभिलषितं करिष्यामि भवत्योऽपि गोपकुलेऽवतरन्त्विति समयं ददौ । ता एवाप्सरस इमा गोपिका इति पौराणिकी कथा ॥ ६७ ॥

**न खल्वमुष्य प्रमदामदान्ध्यं**
**न कुत्सनं तत्तदभीष्टदातुः ।**
**न धर्मसंस्थापनबाधगन्धः**
**शुद्धानुचिन्त्या हि शुभस्य लीला ॥ ६८ ॥**

अर्चाफलस्पर्शनमात्रेति मात्रपदव्यवच्छेद्यमाह— **न खल्विति ।** अमुष्य कृष्णस्य । प्रमदामदान्ध्यं प्रमदालाभजन्येन मदेन पारवश्यं न खलु, अवाप्तसकलकामस्य तदभावः प्रसिद्ध एवेत्यर्थः । उत्तमस्त्रीलाभस्यापि मदहेतुत्वमुक्तं भावप्रकाशे 'मद्योपयोगादैश्वर्याद्विद्यायाश्चाभिजात्यतः । उत्तमस्त्रीपरिष्वङ्गान्मदः संपद्यते नृणाम्' इति । तथाप्यनुरागरहितस्य स्त्रीषु प्रवृत्तौ जुगुप्सा स्यात्, 'विरक्तकामुकशुनामेकस्यामेव योषिति । कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पनाः' इति न्यायात्; तत्राह—न कुत्सनमिति । तत्तदभीष्टदातुः तस्य तस्य भक्तजनस्य यदभीष्टं तत्प्रदातुः तस्य कुत्सनमपि नास्ति, परमकृपालोर्महावदान्यस्य तस्य भक्ताभीष्टसंपादनैकप्रवणत्वादिति भावः । तर्हि परदाराभिमर्शे 'धर्मसंस्थापनार्थाय' इति स्वावतारोद्देश्यप्रयोजनबाधः स्यात्तत्राह— न धर्मेति ।

सर्वान्तर्यामितया सर्वशरीरकस्य तस्य स्वपरदेहविवेकाभावान्नित्यापहतपाप्मत्वाच्च न परदाराभिमर्शनेन स्वस्य दोषप्रसक्तिः । इदं चतुर्थसर्गे अस्माभिः प्रपञ्चितम् । नापि प्राणिनामितो धर्मविप्लवापत्तिः । ईश्वराणां चरितापेक्षया वचसां प्राबल्येन 'न परदारान्गच्छेत्' इति भगवदाज्ञारूपया श्रुत्या निषिद्धे कर्मणि तदाचारदर्शनमात्रेण परेषां प्रवृत्त्यसंभवात् । अतः शुभस्य परममङ्गलस्य कृष्णस्य । लीला गोपिकाभिः क्रीडा । शुद्धानुचिन्त्याहि शुद्धान्तःकरणानां मुमुक्षूणामनुचिन्त्यैव । इयं हि क्रीडा शृङ्गाररसाकृष्टचेतसो बहिर्मुखानपि स्वचरितश्रवणपरान्कृत्वा संसारादुत्तारयितुं भगवता लोकानुग्रहैकरसिकेन कृता, 'अनुग्रहाय भक्तानां मानुषं देहमास्थितः । भजते तादृशी क्रीडां यां श्रुत्वा तत्परो भवेत्' इति भागवतवचनात् । अतो मलिनचित्तानामप्यनुचिन्तनेनोत्तारणी भगवत्क्रीडा शुद्धानां कथं नोत्तारणीति भावः ॥ ६८ ॥

**अनागमप्रत्ययसंभवानां**
**गुरुत्यजां गोपकुमारिकाणाम् ।**
**अनन्यसङ्गात्स दयालुरासी-**
**दसङ्गघण्टापथसार्थवाही ॥ ६९ ॥**

**अनागमेति** । असङ्गाः रागरहिताः तेषां घण्टापथः घण्टोपलक्षितगजमार्गः महामार्गः तत्र सार्थं जनसमूहं वाहयति नयति गीताद्युपदेशेन तत्र प्रवर्तयतीति स तथोक्तः । एवमखिलविरक्तमूर्धन्यः कृष्णः । अनागमप्रत्ययसंभवानाम् आगमे 'नातिचरेद्भर्तारम्' इत्यादिरूपे प्रत्ययसंभवः श्रद्धोदयः स नास्ति यासां तासाम् । गुरुत्यजां श्वशुरभर्तृपित्रादींस्त्यक्तवतीनाम् । गोपकुमारिकाणाम् । अनन्यसङ्गात् अन्यत्रासङ्गराहित्यात् स्वमात्रप्रावण्याद्धेतोः । दयालुरासीत् दयया ताः पर्यग्रहीदित्यर्थः । लोक-

जातम् । तासां सौभाग्यदुर्मानमदं सौन्दर्यदुरहंकारमेव मदम् । विने-ष्यन्सन् । पुष्पावचायव्यपदेशलौल्यात् पुष्पाहरणव्याजेन चलनात् । अबहिःस्थितोऽपि सर्वान्तर्यामितया सततमन्तःस्थितोऽपि । दवीयान् दूरतरो विप्रकृष्टः । आसीत् । स्वमायया तत्रैवान्तर्हित इत्यर्थः ॥ ७१ ॥

**अविप्रकर्षेऽपि तिरस्करण्या**
**क्लृप्तावृतिं कृष्णमनीक्षमाणाः ।**
**भीमैरदूयन्त भृशं तरुण्यः**
**क्षणैः स्वनिःश्वाससमीरदीर्घैः ॥ ७२ ॥**

**अविप्रकर्ष इति** । अविप्रकर्षेऽपि विप्रकर्षाभावेऽपि । तिरस्करण्या स्वमायारूपया यवनिकया । क्लृप्तावृतिं कृतावरणम् । कृष्णम् । अनीक्षमाणाः । तरुण्यः । भीमैः विरहव्यथया रात्रौ पुरुषसहायाभावेन च तासां भयंकरैः । स्वनिःश्वाससमीरदीर्घैः विरहप्रवृद्धैः तदीयनिःश्वासवायुभिरिव दीर्घैः । क्षणैः । अदूयन्त । क्षणानपि युगवत्प्रेक्षमाणाः पर्यतप्यन्तेत्यर्थः । तिरस्करणीशब्दो ल्युडन्तः ॥ ७२ ॥

**पुष्पावकीर्णेषु वनद्रुमाणां**
**मूलेषु मोहालसचेतसस्ताः ।**
**कृतासिकाः कृष्णवियोगखेदा-**
**त्कामास्त्रपर्यङ्कगता इवासन् ॥ ७३ ॥**

**पुष्पेति** । मोहालसचेतसः मूर्च्छया स्तब्धचित्ताः । पुष्पावकीर्णेषु स्वयं निपतितपुष्पप्रकीर्णेषु । वनद्रुमाणां मूलेषु । कृतासिकाः कृतोपवेशाः । 'धात्वर्थनिर्देशे ण्वुल्वक्तव्यः' इति आसेर्ण्वुल्प्रत्ययः । ता गोपिकाः ।

कृष्णवियोगखेदात् कामास्त्रपर्यङ्कगता इवासन्। कृष्णवियोगखेदासहिष्णुतया वेधपाटनादिना मरणं भवत्विति कामास्त्रक्लृप्तान्पर्यङ्कान्प्राप्ता इवासन् ॥ ७३ ॥

विलीनचित्ता विषमास्त्रतापा-
द्विलापयन्त्यो वसुधां विलापैः ।
अदृश्यरूपस्य हरेरगाय-
न्गुणांश्चरित्राणि च गोपकन्याः ॥ ७४ ॥

**विलीनेति**। विषमास्त्रतापात् मदनतापात्। विलीनचित्ताः द्रुतचेतसः। विलापैः कृष्णगुणाख्यानसहितरोदनैः। 'विलापस्तु गुणाख्यानसहितं रोदनं भवेत्' इति भावप्रकाशः। वसुधां काननभूमिम्। विलापयन्त्यः द्रवयन्त्यः। लीयतेर्ण्यन्तस्य 'विभाषा लीयतेः' इत्यात्वे पुगागमः। इत्थंभूता गोपकन्याः। अदृश्यरूपस्य हरेः गुणान् सौन्दर्यादीन्। चरित्राणि गोवर्धनधारणादीनि च। अगायन् ॥ ७४ ॥

मुकुन्दविश्लेषविमोहितानां
संश्रूयमाणानि मुहुर्वनान्ते ।
शमप्रदान्यात्मविदामभूवं-
स्त्रय्यन्तगन्धीनि वचांसि तासाम् ॥ ७५ ॥

**मुकुन्देति**। मुकुन्दविश्लेषेण विमोहितानां मोहं प्रापितानाम्। तासाम्। त्रय्यन्तगन्धीनि उपनिषदर्थानुवृत्तिमन्ति। गन्धशब्देन तदर्थसंस्पर्शो लक्ष्यते। वनान्ते। मुहुः संश्रूयमाणानि वचांसि भगवद्गुणचरितविषयाणि। आत्मविदां शमप्रदानि उपशान्तेः प्रदायकानि। अभूवन्।

'आतश्चोपसर्गे' इति कप्रत्ययः । विरहव्यथालब्धभगवदैकाग्र्यपुण्येन हृदयप्रतिफलिततद्याथात्म्यानां गोपिकानां तत्स्पर्शीनि गोपिकागीतादीनि वचनानि विषयमहिम्ना शृण्वता शमप्रदान्यामन्त्रित्यर्थः ॥ ७५ ॥

**स माययात्मानमसौ परेषां**
**प्रच्छाद्य संदर्शयति प्रसादात् ।**
**इतीममर्थं प्रथयन्प्रियाणां**
**दृष्टिं शुभां दातुमियेष तासाम् ॥ ७६ ॥**

**स इति** । स कृष्णः । असौ परेषां स्वव्यतिरिक्तानां जीवानाम् । मायया आत्मानं प्रच्छाद्य नित्यसंनिहितमपि स्वात्मानं मायया जीवानां तिरोहितं कृत्वा । प्रसादात् भक्तानामाराधनजनितेन तेषु प्रसादेन । संदर्शयति । इतीममर्थम् आगमसिद्धं प्रथयन् लोकेऽपि प्रख्यापयन्सन् । प्रियाणां तासाम् । शुभां दृष्टिं निजं दर्शनम् । दातुम् । इयेष आविर्बुभूषुरासीदित्यर्थः । तासामिति संबन्धसामान्ये षष्ठी ॥ ७६ ॥

**तासामथ स्मेरमुखाम्बुजेन**
**श्यामेन पीताम्बरचित्रितेन ।**
**आविर्बभूवे सहसा पुरस्ता-**
**न्मधुद्विषा मन्मथमन्मथेन ॥ ७७ ॥**

**तासामिति** । अथ । स्मेरमुखाम्बुजेन । श्यामेन । पीताम्बरचित्रितेन । मन्मथमन्मथेन यथा लोकानां मन्मथः सौन्दर्येण मोहकस्तद्वत्तस्यापि मोहकेन तदतिशायिसौन्दर्येण । मधुद्विषा । तासां पुरस्तात् । सहसा अतर्कितम् । आविर्बभूवे । भावे लिट् । स्मेरता मुखपक्षे स्मितशालिता प्रस-

न्नता वा । 'लावण्यरसनिष्यन्दि स्मयमानमिवासकृत् । पुलकोल्लासिगण्डं यत्तत्प्रसन्नमुख भवेत्' इति मुखप्रसादलक्षणमाहुः । अम्बुजपक्षे तु विकासः ॥ ७७ ॥

तमेकचित्ताः प्रतिसंनिवृत्तं
यातेन नृत्यन्तमिवाद्भुतेन ।
गोप्यः पुनर्जातमिवात्मनैव
प्रैक्षन्त संमोदपयोधिमग्नाः ॥ ७८ ॥

**तमिति** । एकचित्ताः एकस्मिन्कृष्णे चित्तं यासां तथाभूताः । गोप्यः । प्रतिसंनिवृत्तं प्रत्यागतं पुनराविर्भूतम् । अद्भुतेन यातेन संचारेण नृत्यन्तमिव स्थितं कृष्णम् । । पुनर्जातमिव प्रेत्य पुनरुत्पन्नमिव । संमोदपयोधिमग्नाः आनन्दाब्धिनिमग्नाः सत्यः । आत्मनैव स्वयमेव अतिसमीपे आविर्भावादन्यदीयप्रदर्शनव्यापारं विनैव । प्रैक्षन्त । आत्मनेति प्रकृत्यादितृतीया । सुबन्तप्रतिरूपकमव्ययमिति केचिदाहुः ॥ ७८ ॥

नवेन्दुरेखाकृशपाण्डुराङ्गी-
स्तापाश्रुसंदर्शितवह्नितोयाः ।
ददर्श गोपीरवतारगोपः
श्वासैस्त्रिलोकीमिव शोषयन्तीः ॥ ७९ ॥

**नवेति** । अवतारगोपः भगवदवताररूपो गोपः कृष्णः । नवेन्दुरेखाः प्रतिपच्चन्द्रकला इव कृशानि पाण्डुराणि चाङ्गानि यासां ताः । तापेनाश्रुणा च क्रमेण दर्शिते वह्नितोये याभिस्ताः । श्वासैः विरहव्यथया अत्युष्णैः त्रिलोकीमुपशोषयन्तीर्गोपीः ददर्श । अत्र विशेषणसाम्याद्गोपीनां तपस्विनी-

नियमो व्यज्यते । तपस्यन्त्योऽप्युपवासादिना कृशपाण्डुरशरीराः तपोभिः संभृतवह्निजलाश्च भवन्ति, तपस्तेजोभिश्च जगन्ति शोषयन्तीति । तथा च तपस्यन्तीनां वरं दातुमागत्य ता उपददर्शेति भावः ॥ ७९ ॥

अविध्यतैकः प्रणयापराधी
योगैरलक्ष्यो युगपत्प्रयुक्तैः ।
आवर्जितभ्रूधनुषाममोघै-
रेणीदृशामीक्षणचित्रपुङ्खैः ॥ ८० ॥

अविध्यतेति । प्रणयापराधी प्रणयकृतलीलान्तर्धानरूपापराधवान् । योगैः ध्यानयोगैरपि । अलक्ष्यः लक्षयितुमशक्य. कृष्णः । एकः । आवर्जितभ्रूधनुषाम् आनमितभ्रूचापानाम् । एणीदृशाम् । युगपत्प्रयुक्तैः । अमोघैः । ईक्षणचित्रपुङ्खैः अवलोकनशरैः । अविध्यत विद्धोऽभूत् । एकत्रैव तस्मिंस्तासां दृष्टयः प्रणयकोपभरिताः युगपन्निपेतुरित्यर्थः । ‘ चित्रपुङ्खविशिखेषुकलम्बाः ’ इति हलायुधः ॥ ८० ॥

प्रसादजीवातुभिरङ्गनानां
प्रत्येकमन्याभिरलक्षणीयैः ।
विलासचाटूक्तिविलोकनाद्यै-
रानन्दयन्सान्त्वनमाचचार ॥ ८१ ॥

प्रसादेति । अङ्गनानाम् । प्रसादस्य जीवातुभिः जीवनौषधैः । ‘ जीवातुर्जीवनौषधम् ’ इत्यमरः । मनःप्रसादमुन्मीलयद्भिः । अन्याभिः । अलक्षणीयैः अनीक्षणीयैः । विलासचाटूक्तिविलोकनाद्यैः विलाससहितैः

प्रियवचनकटाक्षविक्षेपादिभिः। आद्यपदेन तदङ्गस्पर्शोपलालनादि गृह्यते। तैः, प्रत्येकम्। आनन्दयन्। सान्त्वनम् अनुनयम्। आचचार ॥ ८१ ॥

तासां तदङ्गव्यतिषङ्गलोभा-
त्सैरन्ध्रिकावृत्तिमुपेयुषीणाम्।
विरक्तनिध्येयपदः स रागी
रागाधिकां प्रास्तुत रासलीलाम् ॥ ८२ ॥

**तासामिति**। विरक्तनिध्येयपदः विरक्तानां विरागिणां निध्येयं द्रष्टुं शक्यं पदमङ्घ्रिर्यस्य सः। स रागी रागवान्कृष्णः। तदङ्गव्यतिषङ्गलोभात् तस्य कृष्णस्याङ्गसपर्के स्पृहया। सैरन्ध्रिकाणां प्रसाधिकानां वृत्तिं तदङ्गप्रसाधनरूपाम्। उपेयुषीणां प्राप्तवतीनाम्। तासाम्। रागस्य अधिकां प्रवर्धिनीम्। रासलीलां रासशब्दितनृत्तविशेषरूपां लीलां क्रीडाम्। प्रास्तुत आरभत। 'अनेकनर्तकीयोज्यं चित्रताललयान्वितम्। आचतुःषष्टियुगलं रासकं मसृणोद्धतम्' इति रासलक्षणमाहुः ॥ ८२ ॥

तदग्रहस्तग्रहणार्थिनीनां
स सव्यतो दक्षिणतश्च तिष्ठन्।
बभार विद्युद्व्यवधानभाजां
वात्याजुषां वारिमुचामभिख्याम् ॥ ८३ ॥

**तदिति**। स कृष्णः। तदग्रहस्तग्रहणार्थिनीनां रासनृत्ताय तस्य कृष्णस्य अग्रहस्तग्रहणमर्थयमानानां तासाम्। सव्यतः दक्षिणतश्च तिष्ठन् कायव्यूहं परिगृह्य पार्श्वद्वयेऽपि तिष्ठन्सन्। विद्युद्व्यवधानभाजां विद्युद्भिः

व्यवधानं भजमानानाम् । वात्याजुषां भ्रमिहेतुमण्डलीवातं प्राप्तानाम् । पयोमुचाम् । अभिख्यां शोभाम् । बभार । 'वात्या वातस्तु मण्डली' इति यादवः ॥ ८३ ॥

द्वयोर्द्वयोरेकतया स तासां
मध्ये स्थितो मण्डलरासनृत्ते ।
करद्वयस्पर्शरसेन कान्ताः
प्रत्येकमानन्द्य भृशं ननन्द ॥ ८४ ॥

द्वयोरिति । मण्डलरासनृत्ते मण्डलाकारे रासनृत्ते । तासां मध्ये । द्वयोर्द्वयोरङ्गनयोः । एकतया स्थितः । सः कृष्णः । करद्वयस्पर्शरसेन पार्श्वद्वयेऽपि स्थितस्य स्वस्य करद्वयग्रहणमेव रस्यत आस्वाद्यत इति रसो विषयः तेन । कान्ताः । प्रत्येकमानन्द्य । स्वय सर्वासां युगपत्करद्वयग्रहणेन भृशं ननन्द । अत्र द्वयोर्द्वयोरित्यत्र पूर्वपूर्वयुगलप्रविष्टः द्वितीयाङ्गनानामुत्तरोत्तरयुगलेष्वायतया निवेश्यः । द्वित्वमविवक्षितम् । अन्यथा तस्य प्रत्यङ्गनानां पार्श्वद्वयमित्यलाभात् ॥ ८४ ॥

अपारमावर्तयता रसाब्धिं
रामानुजो रासजवेन दीव्यन् ।
पदाश्रितानां भ्रमशान्तिहेतुः
प्रियासहस्रं भ्रमयांचकार ॥ ८५ ॥

अपारमिति । रामस्य बलदेवस्यानुजः कृष्णः । अपारम् अनवधिम् । रसाब्धिं शृङ्गाररससागरम् । आवर्तयता मन्थाचलवद्वाघूर्णयता । रास-

जवेन रासनृत्तवेगेन। दीव्यन् क्रीडन् सन्। पदाश्रितानां प्रपन्नानाम्। भ्रमशान्तिहेतुः भ्रमस्य मिथ्याज्ञानस्य इह परत्र च गतागतरूपस्य भ्रमणस्य वा शान्तिहेतुरपि। प्रियाणां सहस्रं बह्वीः प्रियाः। भ्रमयांचकार भ्रमयति स्म ॥ ८५ ॥

**स्वमायया घूर्णयतो महत्या**
**विश्वानि भूतानि विभोरजस्रम्।**
**रामाजनं रासवशं विधाय**
**स्वस्य स्वयं प्राप निदर्शनत्वम् ॥ ८६ ॥**

**स्वमाययेति**। रामाजनं गोपस्त्रीजनम्। रासवशं विधाय रासनृत्ताधीनं कृत्वा। महत्या स्वमायया। विश्वानि भूतानि कृत्स्नाञ्जन्तून्। अजस्रम्। आघूर्णयतः संसारचक्रे भ्रमयतः। स्वस्य स्वयं निदर्शनत्वं दृष्टान्तत्वम्। प्राप। दृष्टान्तान्तररहिततया स्थितस्य संसारचक्रे भूतानां भ्रमणस्य रासचक्रभ्रमणमिदं दृष्टान्त आसीदित्यस्य नैरन्तर्यस्योत्कर्षस्याभिव्यक्तिः ॥

**स्वपादपांसुस्नपिताकृतीनां**
**स्विद्यन्मुखीनां व्रजसुन्दरीणाम्।**
**लम्बालकानां ललितस्मितानां**
**लाभात्स्वयं लब्धमनोरथोऽभूत् ॥ ८७ ॥**

**स्वपादेति**। स्वकीयपादपांसुभिः नृत्तवेगोत्थितैः स्नपिताकृतीनाम् अभिषिक्तशरीराणाम्। स्विद्यन्मुखीनां श्रमात्स्विद्यदाननानाम्। लम्बालकानां नृत्तवेगश्लथतया लम्बमानालकानाम्। ललितस्मितानां श्रमेऽपि

प्रियसहक्रीडनानन्देन मञ्जुलमन्दहासानाम् । व्रजसुन्दरीणाम् । लाभात् । स्वयं लब्धमनोरथोऽभूत् पूर्णकामोऽभवत्, तासां तादृगवस्था तस्यात्यन्त इष्टासीदित्यर्थः ॥ ८७ ॥

सनृत्तगीतेन विहारयूना
गोपीजनैरन्तरितेन बद्धम् ।
तदद्भुतप्रस्थिति रासचक्रं
जवादलक्ष्यान्तरमाबभासे ॥ ८८ ॥

सनृत्तेति । गोपीजनैः । अन्तरितेन व्यवहितेन । सनृत्तगीतेन नृत्तगीतविशेषसहितेन । विहारयूना विहारेण यूना बहुशः पुराणपुरुषेण कृष्णेन । बद्धम् । अद्भुतप्रस्थिति आश्चर्यभूतभ्रमणम् । रासचक्रं रासनृत्तमण्डलम् । जवात् वेगात् । अलक्ष्यान्तरम् अदृश्यावकाशम् । आबभासे अलातचक्रवद्वेगातिशयात्सर्वत्र युगपत्सर्वासां दर्शनेन निरन्तरं बभौ ॥ ८८ ॥

जगुः सहर्षं दिवि देवकन्या
दिव्यास्तदा दुन्दुभयः प्रणेदुः ।
पपात कल्पद्रुमपुष्पवृष्टिः
सदर्चिते संश्रितरासलीले ॥ ८९ ॥

जगुरिति । तदा । सदर्चिते साधुपूजिते कृष्णे । संश्रितरासलीले सति । दिवि । देवकन्याः सुराङ्गनाः । 'कन्या कुमारिकानार्योः' इति विश्वः । सहर्षं जगुः रासनृत्तानुकूलं गायन्ति स्म । दिव्याः दिवि भवाः । दुन्दुभयः । प्रणेदुः । कल्पद्रुमपुष्पवृष्टिरपि पपात । सदर्चित इति शेष-

षष्ठीसमासः । 'क्तेन च पूजायाम्' इति निषेधस्तु कर्मषष्ठीविषय । यद्वा अर्चित इति भूते क्तप्रत्यय । तस्य तृतीयासमास ॥ ८९ ॥

**गृहीतहस्तद्वितयाः सलीलं**
**मिथ्याभुजंगेन मृगीदृशस्ताः ।**
**परिभ्रमन्त्यो विपरीतवृत्त्या**
**प्रक्रान्तरासां भुवमभ्यजानन् ॥ ९० ॥**

**गृहीतेति** । मिथ्याभुजगेन मृषाविटेन विटवृत्तिमनुकुर्वता कृष्णेन । सलील गृहीतहस्तद्वितयाः सत्य । परिभ्रमन्त्यः । ता मृगीदृशः । भुव भूमण्डलम् । विपरीतवृत्त्या । प्रक्रान्तरासाम् अभ्यजानन् स्वभ्रमणविपरीतवृत्त्या प्रक्रान्तरासामभ्यजानन्, स्वभ्रमणविपरीतप्रकारेणोपक्रान्तरासनृत्तभ्रमणामभ्रमन्नित्यर्थ । वेगेन भ्राम्यता वृक्षवाटिकादौ विपरीतभ्रमारोपो लोकसिद्धः ॥ ९० ॥

**मनोज्ञमल्लीहसितेन तासां**
**रम्येण कृष्णो रजनीमुखेन ।**
**अन्यादृशीं प्रीतिमनन्ययोगा-**
**दापादयिष्यन्विरराम रासात् ॥ ९१ ॥**

**मनोज्ञेति** । कृष्णः । तासाम् । अनन्ययोगात् अनन्यभजनात् ऐकान्त्याद्धेतोः । मनोज्ञमल्लीहसितेन रुचिरमल्लिकाकुसुमस्मितेन । रम्येण रजनीमुखेन प्रदोषेण । अन्यादृशीं रासनृत्तप्रीतिविलक्षणाम् । प्रीतिम् । आपादयिष्यन् सम्पादयिष्यन्सन् । रासात् विरराम सर्वप्रकारेणापि प्रपन्नेषु

बहुधा प्रीतिं सपादयितुमीहते भगवानिति भाव ॥ ९१ ॥

उद्भिन्नघर्माम्बुकणं विहारा-
त्तासां करस्पर्शरसेन चैनम् ।
लतागृहे नन्दनगर्भशोभि-
न्यासीनमन्वासत गोपकन्याः ॥ ९२ ॥

**उद्भिन्नेति** । विहारात् रासक्रीडाया. । तासा गोपिकानाम् । करस्पर्शरसेन करस्पर्शपरिपोषितेन शृङ्गाररसेन च । उद्भिन्नघर्माम्बुकणम् अङ्कुरितश्रमजलम् , सात्त्विकभावोद्भवरूपस्वेदसलिलकणम् । नन्दनगर्भशोभिनि नन्दनवनान्तरावकाशवच्छोभमाने । ' कर्तर्युपमाने ' इति णिनि. । लतागृहे अतिमुक्तमये । ' अतिमुक्त पुण्ड्रकः स्याद्वासन्ती माधवी लता ' इत्यमरः । लतासामान्यपरो वाय लताशब्द । आसीनम् उपविशन्तम् । एन कृष्णम् । गोपकन्या अन्वासत । कृष्णेन सहासतेत्यर्थः । अनुशब्दस्तृतीयार्थद्योतक । अत एव ' तृतीयार्थे ' इति सूत्रेण तस्य कर्मप्रवचनीयसज्ञया तद्युक्ते द्वितीया । अन्वासन पश्चादुपविश्योपासनमिति केचित् । तदा कर्मणि द्वितीया ॥ ९२ ॥

स्वलम्भितैश्चित्रपलाशपुष्पैः
संवीज्यमानो विटपैः प्रियाभिः ।
निदर्शयामास वनान्तराले
नीलाद्रिमुद्भ्रान्तमयूरबृन्दम् ॥ ९३ ॥

**स्वलम्भितैरिति** । प्रियाभिः कर्त्रीभिः । वनान्तराले । स्वलम्भितै·

स्वेन प्रापितैः स्वयमाहृत्य दत्तैः । चित्रपलाशपुष्पैः चित्राणि पलाशानि पत्राणि पुष्पाणि च येषु तैः । विटपैः शाखाभिः करणैः । 'विटपः पल्लवे षिङ्गे विस्तारे स्तम्बशाखयोः' इति विश्वः । तैः सवीज्यमानः कृष्णः । उत्क्रान्तमयूरबृन्दम् उपरिकृतभ्रमणमयूरबृन्दम् । नीलाद्रिम् । निदर्शयामास । निदर्शनीकृतवान् अनुचकारेत्यर्थः ॥ ९३ ॥

विचित्रलीलाहितवेपथूनां
तासामनासादितविश्रमाणाम् ।
तापोपशान्त्यै तपनात्मजाया-
माह्लादनीमद्भिरियेष लीलाम् ॥ ९४ ॥

**विचित्रेति** । विचित्रया लीलया रासनृत्तरूपया आहितवेपथूनां सपादितशरीरकम्पानाम् । अनासादितविश्रमाणां तदनन्तरमप्राप्तविश्रमाणाम् । तासाम् । तापस्योपशान्त्यै । तपनात्मजायां यमुनायाम् । आह्लादनीम् आह्लादकारिणीम् । करणार्थे ल्युट् । अद्भिः लीलां जलक्रीडाम् । इयेष ॥ ९४ ॥

मुखेन तस्य द्विजराजभासा
ताराभिरामेण तमोपहेन ।
प्रेमोदधिं वर्धयता प्रियाणां
संचिक्षिपे तत्र सरोजकान्तिः ॥ ९५ ॥

**मुखेनेति** । ताराभिरामेण तारया कनीनिकया मनोज्ञेन । चन्द्रपक्षे ताराभिः परितः स्थिताभिरुडुभिः अभिरामेण । तमोपहेन भक्तजनतमो-

गुणापनोदकेन । पक्षे अन्धकारनिवर्तकेन । प्रियाणां प्रेमोदधिं रागसागरं वर्धयता । अत एव विशेषणसाधारण्यात् द्विजराजभासा चन्द्रत्विषा । तस्य कृष्णस्य । मुखेन । तत्र यमुनायाम् । सरोजानां कान्तिः । सचिक्षिपे संक्षिप्ता अल्पीकृता । चन्द्रो हि पद्मकान्तिं संकोचयति । जलक्रीडार्थमवतरति कृष्णे तन्मुखकान्तिनिरीक्षणेन पद्मानां शोभा फल्गुतयादृश्यतेत्यर्थः ॥ ९५ ॥

संध्याघनाभः स तदा प्रियाणां
मध्ये बभौ वारिजरेणुताम्रैः ।
शृङ्गारदिग्धैरिव दृष्टिपातैः
शृङ्गोदकैराप्लुतचित्रदेहः ॥ ९६ ॥

**संध्येति** । तदा जलक्रीडासमये । वारिजरेणुभिरिव ताम्रैः वारिजरेणुभिर्योगात्ताम्रैरिति वा । अत एव शृङ्गारदिग्धैः शृङ्गाररसस्थायिभावेन रत्याख्येन अरुणतया प्रसिद्धेन रूषितैः । दृष्टिपातैरिव स्थितैः । **शृङ्गोदकैः** शृङ्गाणि क्रीडाम्बुयन्त्राणि । 'शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके' इति विश्वः । तदुद्धृतैः कुङ्कुमाद्युदकैः । आप्लुतचित्रदेहः आर्द्रितशबलमूर्तिः सः । संध्याघनाभः संध्यामेघप्रभो बभौ ॥ ९६ ॥

स पद्मिनीनां सलिलस्थितानां
चकार संमीलनमाशु तासाम् ।
तुषारजालैस्तुहिनांशुसौम्यः
कामोपनेता करयन्त्रमुक्तैः ॥ ९७ ॥

**स इति**। कामोपनेता कामानां भक्तजनेप्सितानां कामस्य गोपिकानां मदनस्य वा उपनेता आहर्ता। अत एव मदनरसोपनेतृत्वात्, तुहिनांशु-सौम्यः चन्द्र इव हृद्यः। स कृष्णः। करयन्त्रमुक्तैः करयोर्बन्धविशेषरूपेण यन्त्रेण मुक्तैः। तुषारजालैः शीकरसमूहैः। 'तुषारौ हिमशीकरौ' इति शब्दार्णवः। सलिलस्थितानां तासां पद्मिनीनां पद्मिनीजातिस्त्रीविशेषाणाम्। आशु समीलन चकार। संमीलनमिति मीलतेर्णौ ल्युट्। ततश्च समीलयांचकारेत्यर्थः। यथा तुहिनांशुः करेण किरणेनैव यन्त्रेण मुक्तैस्तुहिनजालैः जलस्थिताः पद्मिनीः नलिनीर्निमीलयति तद्वदिति भावः। आश्रित्यनेन सर्वासां युगपन्मीलनं कारितमिति हस्तलाघवं व्यज्यते॥

पटीरपङ्कैः प्रतिपन्नगङ्गां
शोणान्वितां कुङ्कुमसंगमेन।
कस्तूरिकाभिः प्रचितात्मवर्णां
कृष्णप्रियाः कृष्णनदीं वितेनुः॥ ९८॥

**पटीरेति**। कृष्णस्य प्रियाः गोप्यः। कृष्णनदीं कृष्णवर्णत्वात्कृष्णप्रियत्वाद्वा कृष्णनदी यमुना ताम्। पटीरपङ्कैः चन्दनकर्दमैः। प्रतिपन्नगङ्गां प्राप्तगङ्गाम्। कुङ्कुमसगमेन शोणान्वितां शोणनदयुक्ताम्। कस्तूरिकाभिः प्रचितात्मवर्णाम् उपचितनिजशीलवर्णां च। वितेनुः चक्रुः॥

अकालजातप्रतिमेन्दुजाला-
नाकीर्णमिथ्याशफरांस्तरङ्गान्।
वक्त्राक्षिवक्षोरुहबिम्बयोगा-
दकल्पयन्कल्पितचक्रवाकान्॥ ९९॥

**अकालेति** । वक्त्राणामक्ष्णा वक्षोरुहाणा च बिम्बानां योगात् । तरङ्गान् यमुनोर्मीन् । अकालजातप्रतिमेन्दुजालान् असमयोत्पन्नचन्द्र प्रतिबिम्बसमूहान् । आकीर्णमिथ्याशफरान् विप्रकीर्णमृषामत्स्यान् । शफरो मत्स्यविशेष । कल्पितचक्रवाकाश्च । अकल्पयन् अकुर्वन् । प्रकृता कृष्णप्रिया कर्त्र्य । वक्त्रादयो जलतरङ्गेषु चन्द्रप्रतिमादिवदभासन्तेत्यर्थ । रजनीमुखे चन्द्रोदयात्प्रागेव जलक्रीडेत्याशयेन अकालजातेत्युक्तम् ॥ ९९ ॥

**सविभ्रमा चारुपयोधराभा**
**ताभिः समं सूर्यसुता प्रपेदे ।**
**अलब्धपूर्वं तदनन्यलभ्यं**
**कृष्णोपभोगेन कृतार्थभावम् ॥ १०० ॥**

**सविभ्रमेति** । सविभ्रमा वीना हंसादिपक्षिणा भ्रमणै. सहिता । चारुपयोधराभा रुचिरमेघप्रभा । विभ्रमेण शृङ्गारचेष्टया सहिता, चारुकुचप्रभेत्यपि गम्यते । एवभूता सूर्यसुता यमुना । ताभिः गोपिकाभि समम् । अलब्धपूर्वं पूर्वमलब्धम् । अनन्यलभ्यम् अन्येनाल्पपुण्येन जनेन लब्धुमशक्यम् । कृष्णोपभोगेन कृतार्थभाव कृतार्थत्व प्रपेदे । यथा गोप्य कृष्णोपभोगेन कृतार्था बभूवु , एव यमुनापि स्वस्मिन् जलक्रीडारूपेण तेन कृतार्था बभूवेत्यर्थ ॥ १०० ॥

**नितम्बवक्षोजनिरूढवृद्धि-**
**र्मध्ये कृशा संश्रितनिम्ननाभिः ।**

विलोलपद्माग्रतरङ्गहस्ता

तासामभूदन्यतमेव सापि ॥ १०१ ॥

**नितम्बेति**। नितम्बाश्च वक्षोजाश्च नितम्बवक्षोजम्। गोपिकानां नितम्बवक्षोजेन स्वस्मिन्प्रविष्टेन निरूढवृद्धिः संपन्नजलवृद्धिः। मध्ये कृशा येषु प्रदेशेषु गोपिका अप्रविष्टास्तेषां मध्ये तत्प्रवेशरहिते कृशा तत्र जलोल्ललनाभावेन यथापूर्वं प्रवाहात्। संश्रितनिम्ननाभिः संश्रिता निम्ननाभयो ययेति तथोक्ता। तासां नाभिकुहरेषु प्रविष्टेत्यर्थः। विलोलपद्माग्रतरङ्गहस्ता विलोलानि पद्मान्येवाग्राणि येषां तथाभूतास्तरङ्गा एव हस्ता यस्यास्तथाभूता। सापि यमुनापि। तासां गोपिकानाम् अन्यतमेव बभूव; नितम्बेत्यादिविशेषणसाम्यात्। ता अपि हि नितम्बवक्षोजनिरूढवृद्धयः मध्ये अवलग्ने कृशाः निम्ननाभयः जले प्लवनाय विलोलहस्ताग्राश्चेति भावः॥ १०१॥

असूययेव प्रमदाजनानां

लाक्षाञ्जनादीनि विलोपयन्ती।

निसर्गशोभातिशयप्रकाशा-

त्कृतोपकारेव नदी बभूव ॥ १०२ ॥

**असूययेति**। असूयया परगुणासहिष्णुतयेव। प्रमदाजनानाम्। लाक्षाञ्जनादीनि चरणालक्तककज्जलपत्रलेखादीनि। विलोपयन्ती अपनयन्ती। नदी। निसर्गशोभातिशयप्रकाशात् अलक्तकादितिरोहितस्वभावसिद्धशोभोत्कर्षस्य तदपनयेन प्रकाशनात्। कृतोपकारेव बभूव॥ १०२॥

चिरप्रवृद्धं दयितेऽनुरागं
चित्ते दुरासेधमिवोद्वमन्ती ।
प्रायेण तत्कान्तिमधूपभोगा-
दृष्टिस्तदा रागमुवाह तासाम् ॥ १०३ ॥

**चिरेति** । तदा जलक्रीडासमये । चिरप्रवृद्धम् । अत एव चित्ते दुरासेध दुर्निरोधम् । दयिते कृष्णे । अनुरागम् । उद्वमन्तीव स्थिता । तासाम् । दृष्टि । प्रायेण । तस्य कृष्णस्य कान्तेरेव मधुन. उपभोगात् । रागम् । उवाह । मधुपाने हि नयनान्यारज्यन्ति । अत्र जलक्रीडाकृतनयनारुण्येन गम्यमाननिमित्तेन दृशामनुरागोद्वमनकर्तृत्व विशेषणगत्योत्प्रेक्ष्यते इति तदर्थ इवशब्द । तत्र चारुण्ये पुनर्मधूपभोगो हेतुत्वेनोत्प्रेक्ष्यत इति तद्यञ्जक. प्रायेणेतिशब्द. ॥ १०३ ॥

अनङ्गरागोज्ज्वलचित्तदेहा
विश्वाधिकं विव्यधुरायताक्ष्यः ।
कह्लारशोभारचितैः कटाक्षैः
कामस्य बाणैरिव तापदीप्तैः ॥ १०४ ॥

**अनङ्गरागेति** । अनङ्गरागेण मदनरसेन अङ्गरागाभावेन च उज्ज्वला विकसिताः स्वभावशोभाप्रकाशाद्दीप्ताश्च चित्तदेहा यासां ता तथोक्ता, मदनरसनिर्वृतचित्ता अङ्गरागाभावेन भ्राजमानदेहाश्चेत्यर्थ । 'उज्ज्वलो दीप्तशृङ्गारज्वलितेषु विकामिनि' इति विश्व । आयताक्ष्यः गोप्य. । कह्लारशोभारचितैः सौगन्धिककान्त्या निर्मितै. तथा अरुणैरिति यावत् ।

अत एव तापदीप्तैः निष्टपनेन ज्वलितैः। कामस्य बाणैरिव स्थितैः। कटाक्षैः। विश्वाधिक विश्वस्माच्चिदचित्प्रपञ्चादधिक कृष्णम्। विव्यधुः विध्यन्ति स्म ॥ १०४ ॥

विगाहनाद्गोपनितम्बिनीनां
संवर्धमाने सहसाम्बुपूरे।
तद्वक्त्रशोभाविजितैः सरोजै-
रन्तर्हितं नूनमवाप्तलज्जैः ॥ १०५ ॥

**विगाहनादिति**। गोपनितम्बिनीनाम्। विगाहनात्। अम्बुपूरे जलबृंहणे। सवर्धमाने सति। 'पूरस्तु जलबृंहणम्' इति यादवः। करिकलभादिवदम्बुपूरप्रयोगः। तद्वक्त्रशोभाविजितैः तासां वक्त्रकान्त्या निर्जितैः। अत एव अवाप्तलज्जैः। सरोजैः। अन्तर्हितम्। नूनमित्युत्प्रेक्षायाम् ॥ १०५ ॥

कृष्णाम्बुदः कल्पितहस्तयन्त्र-
श्चकार गोपीनयनोत्पलेषु।
धाराम्बुसेकादुपसंभवन्त्या
रागश्रिया रक्तसिलीन्ध्रशोभाम् ॥ १०६ ॥

**कृष्णेति**। कल्पितहस्तयन्त्रः रचितजलविक्षेपणोचितकरबन्धविशेषः। कृष्णाम्बुदः अम्बुदसदृशः कृष्णः। कालमेघ इत्यपि शब्दशक्त्या प्रतीयते। गोपीनाम्। नयनोत्पलेषु सिलीन्ध्रोत्पत्तियोग्येष्वनूपदेशेष्विवेति भावः। धाराम्बुसेकात् उपसभवन्त्या। रागश्रिया अरुणिमसंपदा।

रक्तसिलीन्ध्रशोभाम् अरुणकदलीपुष्पकान्तिम् । चकार ॥ १०६ ॥

मुहुः प्रयुक्तां मुखपुण्डरीके
कदर्थयन्त्या करयन्त्रधाराम् ।
कान्ते कयाचिद्दधिरे कराभ्यां
गतागतान्युत्पलकाननानाम् ॥ १०७ ॥

**मुहुरिति** । मुखपुण्डरीके स्ववदनकमले । मुहुः पुनः पुनः । प्रयुक्तां श्रीकृष्णेन प्रक्षिप्ताम् । करयन्त्रस्य जलविक्षेपोचितहस्तबन्धविशेषस्य धारां जलधाराम् । कराभ्यां विततताभ्यां हस्ताभ्याम् । कदर्थयन्त्या व्यर्थयन्त्या । यथा स्वमुखारविन्दे न पतेत्तथा निवारयन्त्येति भावः । कयाचित् गोपिकया । कान्ते कृष्णे । उत्पलकाननानाम् इन्दीवरत्वेनाध्यवसितानामपाङ्गानामिति यावत् । द्वितीयकरयन्त्रजलधारासेचनमलब्धलक्ष्यमेवासीदिति सापहासं पुनः पुनस्तया तस्मिन्कटाक्षाः प्रसारिता इति भावः । यद्वा, उत्पलकाननानाम् इन्दीवरवनानाम् गतागतानि दधिर इवेति स्वरूपोत्प्रेक्षा । सा चापाङ्गगतागतलक्षणविषयानुपादानादनुक्तविषया व्यञ्जकाप्रयोगाद्गम्येत्यनयोः संदेहसंकरः ॥ १०७ ॥

प्रयापिते गोपिकया कयाचि-
त्कृष्णाननं कीचकयन्त्रतोये ।
निमीलनोन्मीलनतस्तदीया-
न्नक्तंदिवं तत्क्षणहर्म्यमासीत् ॥ १०८ ॥

**प्रयापित इति** । कयाचिद्गोपिकया कर्त्र्या । कीचकयन्त्रतोये अन्तः-

सुषिरयुक्तवेणुयन्त्रजले । कृष्णाननं प्रति । प्रयापिते प्रस्थापिते सति । तदीयात् कृष्णसबन्धिनः । निमीलनोन्मीलनतः । नक्त दिव नक्त दिवा चेत्युभयम् । तत्क्षणदृश्यमासीत् तस्मिन्क्षणे दर्शनयोग्यमासीत् । निमीलने जगतामप्रकाशादुन्मीलने तेषां प्रकाशाच्चेति भावः । यद्यपि 'अचतुर' इत्यादिना नक्तंदिवमिति सप्तम्यर्थवृत्तेः समासान्तः कृतः, तथाप्यत्र तदविवक्षायामपि लक्षणया प्रयोगः ॥ १०८ ॥

तमार्द्रभावान्निबिडान्तरीयं
　लम्बालकं राशिमिवाद्भुतानाम् ।
पश्चादुपेता परिरभ्य तस्थौ
　काचित्प्रिया कामवधूरिवान्या ॥ १०९ ॥

**तमिति** । आर्द्रभावात् आर्द्रत्वात् । निबिडान्तरीयं ऊरुश्लिष्टपरिधानम् । 'अन्तरीयोपसंव्यानपरिधानान्यधोंशुके' इत्यमरः । लम्बालकं जलक्रीडास्रस्तलम्बमानकेशम् । अद्भुतानां राशिमिव स्थितं कृष्णम् । पश्चादुपेता पृष्ठभागे प्राप्ता । अन्या कामवधूः रतिरिव स्थिता । काचित्प्रिया । परिरभ्य तस्थौ आश्लिष्य स्थिता ॥ १०९ ॥

अभङ्गुरप्रेमबलेन तस्या
　बद्धं प्रियं बाहुलताद्वयेन ।
समीक्ष्य कामार्पितपाशमन्याः
　संभावयामासुरपेतशङ्काः ॥ ११० ॥

**अभङ्गुरेति** । तस्या गोपिकाया. बाहुलतयोर्द्वयेन । **अभङ्गुरप्रेमबलेन** स्थिरप्रणयशक्त्या । बद्धम् , अन्यथा बन्धुमशक्यमिति भाव । **अत एव कामार्पितपाश** कामेन निहितपाशमिव स्थितम् । प्रियम् । अन्या गोपिका समीक्ष्य । अपेतशङ्का. अपगतनिवारणसदेहा सत्य. । सप्लावयामासु· समन्तात्सेचयामासु ॥ ११० ॥

**यदङ्घ्रियोगाज्जगतां त्रयाणां**
**मन्दाकिनी मान्यतमा बभूव ।**
**तयापि संभाव्यतमा तदासी-**
**त्कृष्णेन सा तेन कृतावगाहा ॥ १११ ॥**

**यदिति** । मन्दाकिनी गङ्गा । यदङ्घ्रियोगात् यत्पादसपर्कात् । त्रयाणा जगताम् । मान्यतमा पूज्यतमा । बभूव । तेन कृष्णेन । तदा । कृताव-गाहा कृतजलक्रीडा । सा यमुना । तया मन्दाकिन्यापि । सभाव्यतमा अतिशयेन पूज्या । आसीत् । पदाम्बुजमात्रसपर्कात्सर्वावयवसपर्कोऽति-शयितपवित्रताहेतुरिति भाव. । 'कृत्याना कर्तरि वा' इति वैकल्पिकी तयेति तृतीया ॥ १११ ॥

**अथोपचारानुपपादयन्ती**
**दिव्येन देहेन दिनेशकन्या ।**
**आनर्च पादार्पितरत्नपुष्पा**
**गोपीसखं गोपकुमारमाद्यम् ॥ ११२ ॥**

**अथेति** । अथ भगवतो जलक्रीडानन्तरम् । दिव्येन दिवि भवेन ।

देहेन । उपचारान् वासोङ्गरागादीन् । उपपादयन्ती आहरन्ती । दिनेन्द्रकन्या यमुना । गोपीसखं गोपीनां सखायम् । गोपकुमाररूपम् । आद्यम् आदिपुरुषं भगवन्तम् । पादार्पितरत्नपुष्पा सती । आनर्च नमस्कारादिभिः पूजयामास ॥ ११२ ॥

सरिद्भिरन्याभिरपि प्रभावा-
त्प्रायेण गोपीतनुमाश्रिताभिः ।
तोषादुदन्वत्सुतयोपभोग्य-
स्तोयोपचारेण विभुः सिषेवे ॥ ११३ ॥

सरिद्भिरिति । उदन्वत्सुतया श्रिया । उपभोग्यः । विभुः कृष्णः । प्रभावात् स्वस्य महिम्ना । गोपीनां तनुमाश्रिताभिरपि । सरिद्भिः । तोयोपचारेण जलक्रीडारूपेणोपचारेण तोषात् हर्षात् । सिषेवे सेव्यते स्म । कर्मणि लिट् । यमुनायां नित्यं भगवतो जलक्रीडां दृष्ट्वा तदितरा अपि नद्यः गोपीतनुमाश्रित्य जलक्रीडया सिषेविर इत्युत्प्रेक्षा प्रायेणेति व्यज्यते॥

तमुत्तरन्तं सरितः प्रवाहा-
दुत्तारकं पङ्कमयात्पयोधेः ।
मरुत्प्रयुक्ता वसनाङ्गरागै-
राकल्पयन्नप्सरसस्तदर्हैः ॥ ११४ ॥

तमिति । पङ्कमयात् पापरूपात् । 'पङ्कोऽस्त्री कर्दमैनसोः' इति वैजयन्ती । पयोधेः समुद्रात् संसारात् । उत्तारकम् । सरितः प्रवाहादुत्तरन्तम् । तं कृष्णम् । मरुत्प्रयुक्ताः देवैः प्रेरिताः । अप्सरसः । तदर्हैः

कृष्णोचितैः । वसनाङ्गरागैः वासोभिरनुलेपनैश्च आकल्पयन् अभूषयन् ॥

व्रजाङ्गनाश्च त्रिदशाङ्गनाभिः
प्रसाध्यमाना बहुमानपूर्वम् ।
रमासहायप्रणयानुरूपां
संमाननां साधुजनेष्वविन्दन् ॥ ११५ ॥

**व्रजाङ्गना इति ।** त्रिदशाङ्गनाभिः अप्सरोभिः । बहुमानपूर्वं कृष्णप्रिया इति सत्कारपूर्वम् । प्रसाध्यमानाः वासोङ्गरागादिभिः परिष्क्रियमाणाः । व्रजाङ्गनाश्च । साधुजनेषु ऋष्यादिषु । रमासहायप्रणयानुरूपां भगवत्स्नेहानुरूपाम् । समाननां पूजाम् । अविन्दन् अलभन्त । भगवत्परिग्रहादृष्यादयोऽपि गोपरमणीर्बहुमेनिर इत्यर्थः ॥ ११५ ॥

विहृत्य तस्मिन्व्रजसंमुखीने
चक्रं गवां शैलवनान्निवृत्तम् ।
उपाद्रवत्कश्चिदरिष्टनामा
कैलासपर्यायतनुः ककुद्मान् ॥ ११६ ॥

**विहृत्येति ।** तस्मिन् कृष्णे । विहृत्य गोपिकाभिः सह क्रीडित्वा । व्रजसंमुखीने व्रजाभिमुखे सति । अरिष्टनामा अरिष्टसञ्ज्ञः । कैलासपर्यायतनुः कैलासतुल्यमूर्तिः । कश्चित्ककुद्मान् वृषभः । शैलवनात् गोवर्धनस्य काननात् । निवृत्तं गवां चक्रं समूहम् । उपाद्रवत् अभ्यधावत् । यद्यपि 'यथामुखसमुखस्य दर्शनः खः' इति सूत्रेण समुखशब्दाद्दर्शनार्थे खप्रत्ययो विहितः, दर्शनशब्दश्च दृश्यतेऽस्मिन्निति आदर्शादिः प्रतिबिम्बाश्रय

इति वृत्तौ विवृतः; तथाप्युपचारादिह अभिमुखमात्रपरत्वं बोध्यम्। अथवा व्रजाभिमुखीभूय गच्छन्नवयवनैर्मल्याद्व्रजसमुखानामादर्शवत्प्रतिबिम्बग्राहितया दर्शनयोग्यो भवति देव इति मुख्यार्थपरत्वमनुसधेयम् ॥

खुराग्रवज्रेण विदारयन्क्ष्मां
विषाणनिर्भिन्नविमानमूलः ।
दुर्वारवेगो ददृशे स दूरा-
न्मृत्योरुपक्रान्तमहो महोक्षः ॥ ११७ ॥

**खुरेति**। खुराग्रमेव वज्रं कुलिशं तेन। क्ष्मां विदारयन् पाटयन्। विषाणनिर्भिन्नविमानमूलः अभ्रमार्गपर्यन्तमुन्नतत्वाच्छृङ्गविदलितदेवयानमूलभागः। दुर्वारवेगः अनिवार्यरभसः। मृत्योः उपक्रान्तमहः गोकुलसंहरणोद्योगेन मृत्योरारब्धकल्याणः। स महोक्षः महानुक्षा। 'अचतुर' इत्यादिना महोक्षशब्दोऽच्प्रत्ययान्तो निपातितः। दूराद्ददृशे दूराद्दृष्टः ॥

शृङ्गावरुग्णैः शकटैः प्रकीर्णं
वृषान्तरैराशु विमुक्तमार्गम् ।
व्रजं तदा विप्लुतगोपवर्गं
त्यक्त्वा स कृष्णाभिमुखं जगाम ॥ ११८ ॥

**शृङ्गेति**। तदा। सः वृषभः। व्रजं गोष्ठम्। शृङ्गावरुग्णैः विषाणभग्नैः। शकटैः। प्रकीर्णम्। वृषान्तरैः अन्ये वृषा वृषान्तराणि। 'सुप्सुपा' इति समासः। तैः। आशु शीघ्रम्। विमुक्तमार्गं त्यक्तमार्गम्। विप्लुतगोपवर्गम् उपद्रुतगोपसंघं च। व्रज त्यक्त्वा। कृष्णाभिमुखं यथा तथा। जगाम ॥ ११८ ॥

तमापतन्तं प्रतिसंजिहानो
निर्ह्रादवित्रासितदीनधेनुम् ।
विषाणयुग्मग्रहणेन शौरि-
श्चक्रे विनिष्पीडितपीनकण्ठम् ॥ ११९ ॥

**तमिति** । निर्ह्रादवित्रासितदीनधेनुम् । निर्ह्रादेन हम्बारवेण वित्रासिता उद्वेजिता दीनाः कातरा धेनवो येन तम् । आपतन्तम् उपर्यागच्छन्तम् । तं वृषम् । प्रतिसंजिहानः प्रत्युद्गच्छन् । शौरिः । विषाणयुग्मग्रहणेन । निष्पीडितपीनकण्ठम् उन्मृदितपीवरकण्ठम् । चक्रे । विषाणयुग्मं गृहीत्वा कण्ठपरावर्तनेन मारयामासेत्यर्थः ॥ ११९ ॥

अपहत्य दुर्जयमरिष्टदानवं
जगतामरिष्टमिव जातविग्रहम् ।
व्रजसद्भिरद्भुतविहारतोषितैः
सुरसत्तमैरपि समं स तुष्टुवे ॥ १२० ॥

**अपहत्येति** । स कृष्णः । दुर्जयं जेतुमशक्यम् । जातविग्रहम् उत्पन्नशरीरम् । जगताम् । अरिष्टम् अशुभमिव स्थितम् । 'अरिष्टो वायसे निम्बे गोरसे निरुपद्रवे । क्लीबे वर्णे च चिह्ने च मध्ये ताम्रे शुभाशुभे' इति वैजयन्ती । 'अरिष्टे तु शुभाशुभे' इत्यमरः । एवभूतम् अरिष्टदानवम् अरिष्टनामकमसुरम् । अपहत्य हत्वा । अद्भुतविहारतोषितैः आश्चर्यक्रीडितेन संतोषितैः । व्रजे सीदन्तीति तैः व्रजसद्भिः व्रजस्थैः गोपैः । सुरसत्तमैः सुरश्रेष्ठैरपि । समं तुल्यकालमेव । तुष्टुवे स्तुतः । 'श्रेयाञ्श्रेष्ठः पुष्कलः स्यात्सत्तमश्चातिशोभन.' इत्यमरः ॥

अन्यैरप्यसुरमलिम्लुचैरनेकै-
रातङ्कान्स्थिरचरसूतिभिः प्रसूतान् ।
गोपानां प्रतिविदधे गवां च काले
रामेण स्तुतचरितो रथाङ्गपाणिः ॥ १२१ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
यादवाभ्युदये महाकाव्ये
अष्टमः सर्गः ।

**अन्यैरिति** । रथाङ्गं पाणौ यस्य स कृष्णः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' इति सप्तम्याः परनिपातः । स्थिरचरसूतिभिः स्थावरजङ्गमजन्मभिः । अन्यैरपि । अनेकैः । असुरमलिम्लुचैः असुररूपैश्चोरैः कपित्थाजगरादिभिः । 'चोरैकागारिकस्तेनदस्युतस्करमोषकाः । प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः' इत्यमरः । प्रसूतान् सपादितान् । गोपानाम् गवां च । आतङ्कान् भयानि । 'रुग्भीतितापेष्वातङ्कः' इति वैजयन्ती । काले तस्य प्राप्तकाले । रामेण स्तुतः सन् । प्रतिविदधे प्रतिकरोति स्म । **प्रहर्षिणी वृत्तम्** ॥ १२१ ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजिश्रीरङ्ग-
राजाध्वरिवरसूनुना अप्पय्यदीक्षितेन विरचिते
यादवाभ्युदयव्याख्याने
अष्टमः सर्गः ।
श्रीमते वेदान्तगुरवे नमः ॥

## ॥ श्लोकानुक्रमणिका ॥